

राष्ट्रिय
संस्कृत
संस्थानम्
नवदेहली

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

॥ १७ ॥

राजानकरत्नाकरविरचितम्

# हरविजयम्

विंशतिसर्गात्मकः उत्तरार्द्धभागः

संपादकः
डा० गोपराजू रामा





**Rashtriya Sanskrit Sansthan**
*( Under the auspices of the Ministry of Education and Culture, Govt. of India )*
**New Delhi**



**Ganganatha Jha**
**Kendriya Sanskrit Vidyapitha**
**TEXT SERIES**



*General Editor*
**Dr. G. C. Tripathi**



No. 17

# HARAVIJAYAM

*by*

RĀJĀNAKA RATNĀKARA

( 31-50 *cantos* )

*Edited by*
**Dr. GOPARAJU RAMA**




ALLAHABAD
1983

राष्ट्रियसंस्कृतसंस्थानम्
( केन्द्रीयशिक्षामन्त्रालयस्याङ्गभूतम् )
नवदेहली

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

प्रधानसम्पादकः

डॉ० गयाचरण त्रिपाठी

—•—



सप्तदशं प्रसूनम्

राजानकरत्नाकरविरचितम्

# हरविजयम्

नाम महाकाव्यम्

( ३१-५० सर्गाः )



—•—

सम्पादकः

डॉ० गोपराजू रामा

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
प्रयागः-२११००२
१९८३

श्रीमद्राजानकरत्नाकरविरचितम्

# हरविजयम्

( महाकाव्यम् )

द्वितीयः खण्डः

( ३१–५० सर्गाः )



सम्पादकः

डॉ० गोपराजू रामा




गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्

चन्द्रशेखर आज़ाद पार्क

प्रयाग–२११००२

१९८३

## FOREWORD

It is a matter of great satisfaction that we are able to issue the second volume of Haravijayam, the most extensive *Mahākāvya* of Sanskrit, within six months of the issue of the first volume which appeared in October, 1982. The task of preparing a new and critical edition of Haravijayam was undertaken by this Vidyapeetha approximately 6 years ago. The procurement of various manuscripts and transcripts took a long time, but after all we have been able to complete this project within a reasonable time limit.

The Haravijayam has recently been re-printed with the financial assistance of the Ministery of Education, Government of India. The main aim of the Ministry behind this venture has been to make available to the readers, the old Nirnaya Sagar edition of the text reproduced through offset method. Ours is, however, an entirely new edition edited critically on the basis of new manuscripts material not taken into account in the Nirnaya Sagar edition. It has, therefore, its own justification and its own importance.

Now since a new edition of Haravijyam lies in the hands of the scholars, it is hoped that it shall give a new impetus to the study of this Mahakavya which has not received that honourable a place in the study-progamme of the Sanskrit scholars that it deserves.

I am to thank sincerely my colleague Dr. Goparaju Rama who has not spared any pains to make this text as critical and as valuable as was possible. I also thank Shri Upendra Tripathi of Shankuntal Mudranalaya for printing this Volume nicely, correctly and expeditiously.

*G. N. Jha Kendriya Sanskrit Vidyapeetha,*
*Motilal Nehru Park, Allahabad*-211002

**G. C. Tripathi**
*PRINCIPAL*

# INTRODUCTION

The present volume of the Haravijayam of Rājanakaratnākara comprises the remaining part of the text, that is, from 31 to 50 cantos. Each canto deals with a particular theme and the former is named after the latter, which is evident from the colophons of each canto. The killing of the demon king Andhaka, which is the main theme, is described in the last canto (68-84). A remarkable feature which comes to fore is the concept of identity between Hari and Hara. Hari is described as to have taken equal part as Hara in killing Andhaka (See 43 & 49th cantos) The poet makes no differentiation between the two.

I fully utilised the commentary on the text written by Alaka, as far as it is available and with the help of it I have tried to clarify the knotty versions, say jugglary of words, which appear in the 43rd canto. White face is used at some places so that the schloar can easily follow the complex character of the context.

This volume completes the text of the Haravijayam in its entirety. Care has been taken to keep off errors as far as possible. In spite of that, if any error is detected by the learned scholars the same may be rectified.

I am wholly indebted to those, particularly to Dr. G. C. Tripathi, Principal of the Vidyapeetha, whose guidance and suggestions have enabled me in bringing accuracy as well as authenticity to the text, while editing it.

I acknowledge with thanks the kind co-operation of Km. Tapati Pal, my collegue, at the initial stage of the work.

I thank Smt. Neelam Khare, my research scholar, for her assistance in preparing the press copy.

At the end I sincerely put on record the enthusiasm, fairly shown by Mr. Upendra Nath Tripathi of the Shakuntala Mudranalaya for nice printing and get-up of the text.

लम्बोदरं नमाम्यादौ भवानीवल्लभं तथा ।
प्रेरणास्रोतसोमूलं भृशं विघ्नविनाशकम् ॥

रत्नाकरमहाकाव्यं भवेत्सुबुधतुष्टये ।
अनुसन्धित्सुविदुषां विषयोत्पादकं सदा ॥

अप्रबुद्धा प्रबुद्धा वा शक्तिः क्वापीह कस्य वै ।
शायिनी नैव सन्तिष्ठेत् काव्यस्यास्य विलोडनात् ॥

सम्पादने तु दोषाः स्युर्यत्रतत्रात्र कर्मणि ।
क्षाम्यन्तु सुधियस्तांस्तान् गुणेषु विहितादराः ॥

**Goparaju Rama**

## विषयव्यवस्थापन क्रम

## एकत्रिंशः सर्गः

2469 तारापथात्स हृदयस्थगरिष्ठकार्यः
पृष्ठे पुरन्दरगिरे रचितप्रतिष्ठः ।
माणिक्यगोपुरमतीत्य समाससाद
मार्गावसादरहितस्त्रिदिवोपकण्ठम् ॥१॥

2470 श्च्योतत्सुधाशिशिर-शीकरशारिताभ्र-
भग्नामरद्विरद-शूत्कृतभिन्नवीचिम् ।
तत्पीवरायत[1]कराहति-रुग्णहारि
हैमारविन्द-मकरन्द-विमिश्रतोयाम् ॥२॥

2471 लीलानिमग्न-कमलासनवाहहंस-
सन्देहिताच्छ-जलशीकर-फेनपिण्डाम् ।
उत्तारलग्न-हरिदश्वरथाश्वबन्ध-
भोगीन्द्र-गाढपरिपीततरङ्गवाताम् ॥३॥

2472 विस्तारिणः परिसरान्स्फुटहाटकेश-
मन्त्राभियोगकृत-सिद्धिनरेन्द्रकल्पान् ।
आबिभ्रतीं सकलशैलविलाभिराम-
सीमन्तिनीजन-मनोरमगाढशोभान् ॥४॥

2473 संवादिभारतकथं दधतीमलुप्त-
[2]मत्स्यावनातनुरसस्थविराटमम्भः ।
प्रेङ्खोलनेन हरताण्डवतोऽधिकञ्च
धौताम्बरां क्षय इवोर्मिगणेन गङ्गाम् ॥५॥

---

१. A, B, C कराहत । २. A मत्स्यावराननुरसस्य ।

2474 स्नानावतीर्ण-धवलग्रहचक्रवाल-
सन्देहितेन्दुरुचिबुद्बुदबिन्दुवृन्दाम् ।
[1]उच्चैःश्रवःखुरपुटाहतरत्नपट्ट-
सोपानपङ्क्तिमवलोक्य मुदा ववन्दे ॥६॥

2475 अभ्युन्मिषत्कनकपट्ट-मरीचिपिङ्ग-
मुत्खातरत्नबिसमुन्मदहंसमालम् ।
मन्दाकिनीतटमवेक्ष्य स नीलकण्ठ-
मूर्ध्नोऽस्मरत् धृतकपालशिखामणीन्दोः ॥७॥

2476 स प्रेङ्खितश्रवणतालसमीरवेग-
पर्यस्त-काञ्चनलतास्पद-रत्नपुष्पे ।
सन्दानितं महति कल्पतरावपश्य
दैरावणं सकलनागकुलावतंसम् ॥८॥

2477 गण्डस्थले नवमदानमुचि प्रकृष्ट-
शोभे महाहवविमर्द इवासुराणाम् ।
बद्धास्पदां मधुलिहां पृथुकर्णताल-
दोलानिलेन लुलितां पटलीं दधानम् ॥९॥

2478 दूरव्यपोढमलशीतमरीचिबिम्ब-
गौरच्छवि-श्रवणचामर-चारुभूषम् ।
[2]आलग्नभग्नविकचोज्ज्वलपारिजात-
सन्मञ्जरीकमिव वक्त्रतलं दधानम्[3] ॥१०॥

2479 आघ्रातुमन्यकरिमण्डलदानगन्ध-
मूर्ध्वीकृत-प्रवरपीवर-हस्तदण्डम् ।
आलीढविद्रुमवनप्रभयेव भिन्न-
माताम्रकान्ति पृथु तालुतलं दधानम् ॥११॥

---

१. A उच्चैः श्रवास् for उच्चैःश्रवः । २. A आलग्नभङ्ग for आलग्नभग्न ।
३. A, C वहन्तं for दधानम् ।

2480 चन्द्रप्रभापटलगौरशरीरकान्ति-
लावण्यनिह्नुतमपि प्रकटं वहन्तम् ।
आमन्थर-श्रवणताल-कृताभिघट्ट-
दोलानुबन्धतरलं शुचि कर्णशङ्खम् ॥१२॥

2481 क्षीरोदसिन्धुजठरात्समुत्थितेन
शङ्खेन कर्णशिखराश्रयिणा सलीलम् ।
गण्डस्थलं दधतमुन्नतमिन्दुनेव
सौदर्यताश्रितरसेन विचुम्ब्यमानम् ॥१३॥

2482 हेला धुतिव्यतिकराहित-गण्डदान-
पङ्कच्छटा-शबलितोदर-कुन्दपाण्डु ।
विस्पष्ट-लाञ्छन-कलङ्क-शशाङ्कबिम्ब-
खण्डद्वयप्रतिकृती श्रवणौ दधानम् ॥१४॥

2483 संवर्तकाभ्र-रसितानुविधायि-कण्ठ-
गर्जाच्छलेन चिरसंभृतमुद्गिरन्तम् ।
विस्तीर्ण-कर्णकुहरान्तर-मार्गलब्ध-
कुक्षिप्रवेशमिव सागरमन्थघोषम् ॥१५॥

2484 [1]रीढावलीढ-जलमन्थर-मेघखण्ड-
मुत्क्षिप्तमम्बरतले सरलप्रकाण्डम् ।
हस्तार्गलं दधतमिन्दुकरावदात-
मुत्तम्भितक्षितितलोरगभोगशोभम् ॥१६॥

2485 गण्डस्थलीविगलितातनुदानपान-
लोभागतैरविरलं भ्रमरैर्भ्रमद्भिः ।
पातालगर्भ-सहवासरसेन गाढ-
मालिङ्ग्यमानमिव संतमसप्रबन्धैः ॥१७॥

---

१. A लीढावलीढ ।

2486 आबद्ध-देहभर-काञ्चनभूमिपीठ-
शोणाश्मरश्मिकपिशं त्रिपदीविलासैः ।
सन्ध्यांशुपाटलित-तिग्ममरीचिबिम्ब-
संवादि पादतलमण्डलमुद्वहन्तम् ॥१८॥

2487 निर्वासितस्य रिपुणा सह देवसंघै-
र्भर्तुः सविस्तरनिवासधियेव भूयः ।
कर्णप्रकीर्णकविपाण्डुरपक्ष्मपङ्क्ति-
लक्ष्येण पङ्करुहनालगुणान्वहन्तम् ॥१९॥

2488 बिभ्राणमङ्कुशमशङ्कितशातकुम्भ-
पातं मरुत्तनुपराज्यमिवासनस्थम् ।
आबद्धशोभमभितः शुचिनारदेन
तुङ्गं सुरर्षिसदसेव सुमेरुपृष्ठम् ॥२०॥

2489 तन्वन्नवग्रहकृतं क्षणदावतार-
तारापथोऽन्य इव योऽतिमनोहरत्वम् ।
सास्यं विभातसमयस्य बिभर्ति बाल-
संध्याहितातनुरुचिः स्फुटपुष्करश्रीः ॥२१॥

2490 शृङ्गारिणी पृथुकटाक्षतया च यस्य
लक्ष्म्याश्रितातनुरनुज्झितरत्नकक्ष्या ।
आयोधनावनितलैरिव भात्यशून्य-
रूपा सदानकवलस्थितिभिर्द्विरेफैः ॥२२॥

2491 पर्यस्यतः सकलसच्चरितानुकारि
विस्पष्ट-सज्जनवशीकरणं कराम्भः ।
यस्यासुरीमिव बिभर्ति कपोलभित्ति-
रच्छिन्नदानवरतामभिरामरूपाम् ॥२३॥

2492 यः कुक्षराजितवपुः कटकानुसारि
रूपो रुचासमहिमाहितया कृतश्रीः ।
सच्छारिवंश रचितस्थिति नाकरोधि
नीहारशैल इव चारु बिभर्ति पृष्ठम् ।।२४।।

2493 [1]कक्ष्यानुबन्धरचनारुचिरेण हस्ति-
मल्लेन गौरवपुषा गमितेन शिक्षाम् ।
व्यापारितातनुकरेण रणाङ्गनेषु
दर्पाद्धानिषत येन विपक्षनागाः ।।२५।।

2494 विन्ध्याचलोन्नतिहृता परिपीतदान-
सिन्धूर्मिणा श्रवणतालधुतेन गुर्वीम् ।
कुम्भोत्थितेन नवधातुरजश्च येन
लक्ष्मीमगस्त्यमुनिनेव च यः स्म धत्ते ।।२६।।

2495 गीर्वाणवैरिपृतना समरेषु यश्च
शौर्यातिरेकभृदनुत्त-मदोर्जितश्रीः ।
धत्तेऽनपोढकरटस्थितिमन्यपुष्ट-
नारीमिवाविलरुचिं मधुपायिपङ्क्तिम् ।।२७।।

2496 शैलाधिराज इव यः सविकासमर्द-[2]
नानाबलानुगतनागविदारिदन्तः ।
विष्पन्दि-दानजलनिर्झर-गण्डशैल-
शोभी बिभर्त्यधिकमभ्रकरीत्यभिख्याम् ।।२८।।

2497 प्रेमास्पदाभ्रमुरजस्थितिरव्यपाय-
लक्ष्मीपरिग्रहरुचिप्रचलाकिशोभः ।
योऽभ्यागमेषु [3]हतदुन्दुभिरेति भद्र-
कालीविलासमधरस्थितसैंहिकेयः ।।२९।।

---

१. C कक्ष्यप्रबन्ध for कक्ष्यानुबन्ध ।  २. A, C सविकासिमन्द ।
३. A, C हतदुन्दुभिरेत्य ।

2498 नागाधिपोऽपि दधदस्खलितामशेष-
भोगाशयां स्थितिमुदूढगुरुक्षमो यः ।
[1]तन्वन्विनिद्रकुमुदश्रियमप्यभीक्ष्ण-
मैरावतो युधि विराजति सुप्रतीकः ॥३०॥

2499 देहत्विषाम्बररुचा भुवनानि यश्च
व्यापारिपुच्छलतया युधि रोचमानः ।
यस्य त्रिविष्टपसदामतिवल्लभस्य
विस्पष्टडिण्डिमरुतां स्थितिरेति लक्ष्मीम् ॥३१॥

2500 पर्याप्तदानवपुषा दनुचेष्टितेन
सादृश्यमाश्रितवताप्यत येन लीला ।
यस्याविपन्नयजुषा श्रुतिवर्त्मनेव
लक्ष्मीरभारि चरितेन गुरोर्गजानाम् ॥३२॥

2501 तुङ्गं वपुः सकलहास्तिकभङ्गबद्ध
कक्ष्योऽतिनास्तिक इव स्फुटसाधनश्रीः ।
विस्तारिचक्रमिव राशिमयं बिभर्ति
योऽनेकधामकरकुम्भकरालशोभम् ॥३३॥ षड्विंशत्या कुलकम्

2502 [2]आलीनरत्नकमले कलधौतपङ्क-
पिङ्गीकृताम्भसि स नाकसरित्प्रवाहे ।
आमज्जतो मणिमृणाललतासनाथ-
चञ्चूंन्ददर्श सलिलेश्वरवाहहंसान् ॥३४॥

2503 सङ्ग्रामभग्न-बहुलासुत-शक्तिलग्न-
घण्टासनाथ-पृथुपीवर-कण्ठभागम् ।
ऐक्षिष्ट कासरमसौ समवर्तिनोऽथ
मन्दाकिनी-सरस-काञ्चनकर्दमाङ्कम् ॥३५॥

१. B, C तान्वान्विनिद्र । २. A, B आनील for आलीन ।

2504 तस्यानुकूल-कलहंस-कलापकेलि-
कोलाहलाकुलित-कूलजलान्तरासु ।
लीला-रसाल-सविसाध्वस सारसासु
सारासु रत्नसरसीषु ससार दृष्टिः ॥३६॥

2505 [१]मज्जत्सुरेश-तरुणी-गलितावतंस-
हासाभिराम-मणिसैकत-रोधसोऽसौ ।
निर्वर्ण्य निर्वृतिममन्दरसामवाप
मन्दाकिनी-दुहितृका इव रत्नवापीः ॥३७॥

2506 विश्राम्यते स्म नलिनीतटवर्त्म वीचि-
पर्यस्त-शीकर-कणाहत-हंसयूथम् ।
आसाद्य निर्दलित-मौक्तिक चूर्णरेणु-
संसक्तसान्द्र-सिकताशिशिरीकृतं सः ॥३८॥

2507 मन्दाकिनीतटतरोः स ददर्श मन्द
[२]वातामिवातपलितेन नवांशुकेन ।
ऐरावतीय-दशन-व्रण-पट्टबन्ध-
माबन्धुरं विदधतीमिव कल्पवल्लीम् ॥३९॥

2508 दोलायमान-मणिकुण्डल-चारुरत्न-
काञ्चीकलाप-चरणाभरणाभिरामाः ।
[३]विस्पष्टभेदमवलोकयति स्म कल्प-
वल्लीः स नाकललनाश्च सुवर्णगौरीः ॥४०॥

2509 विस्तीर्ण-काञ्चन-लतागृहजृम्भमाण-
सम्भोगदेवमिथुनं स मुदे विलोक्य ।
सिद्धाङ्गना-करविलुप्त-नवप्रवाल-
मन्दारवृक्षमथ नन्दनकाननं[४] सः ॥४१॥

---

१. A, B, C omit this श्लोक। २. A, B वाताभिघात for वातामिवातप।
३. A, B, C विश्लिस्ट भेद for विस्पष्ट भेद।
४. A वन्दनकानने for नन्दनकाननम्।

2510 सञ्चारि-हंसमिथुनाञ्चित-चारुपाद-
मुद्राङ्क-रत्नसिकताञ्चित-तीरलेखाः ।
पश्यन्नसौ तदुपकण्ठनिविष्ट-हेम-
वापीर्विनिद्रकमलाश्रिरमभ्यनन्दत् ॥४२॥

2511 ऐक्षिष्ट स त्रिदशकाननसङ्गिरङ्ग-
दग्रे कुरङ्गकुलमाकुलितान्तरिक्षम् ।
रत्नप्रभाखचित-सूक्ष्मशरीरपक्ष्म
तारामृगस्य विदधत्परिवारलीलाम् ॥४३॥

2512 माणिक्यपल्लव-मयूखशिखावलुप्त-
छायावितानमपि तत्र स पारिजातम् ।
सच्छायमेव च ददर्श नभःपुरन्ध्रि
हस्ताम्बुजावचितकोमलरत्नपुष्पम् ॥४४॥

2513 विस्तारशालिविलसन्मणिपल्लवाग्र-
निर्गच्छदच्छ-किरणप्रकरच्छलेन ।
रत्नालवालवलयान्तरवर्ति पीत-
मभ्युद्वमन्तमतिभूरिभरादिवाम्भः ॥४५॥

2514 नाकाङ्गनारुण-तलाङ्गुलिचक्रवाल-
सन्देहिताभिनव-पल्लव-पाणिलूनैः ।
अभ्युन्मिषद्भिरपि तत्समकालमेव
लक्ष्मीं वहन्तमपरापररत्नपुष्पैः ॥४६॥ तिलकम्

2515 इत्युत्तरोत्तरविशेषविलोकनेच्छा
विस्तारतामुपगतः शशिमौलिदूतः ।
रत्नप्रभाखचित-काञ्चनतोरणाग्र-
वर्ती मुहूर्तमभवत् पुरुहूतपुर्याः ॥४७॥

## पुरुहूतपुरीवर्णनम्

2516 यस्यां बिभर्ति मणिमन्दिरमिन्द्रनील-
माणिक्यसालवलयान्तरसन्निविष्टम् ।
विस्तारशालिमधुसूदनबाहुदण्ड-
मन्दीरमध्यगत-मन्दरशैललीलाम् ॥४८॥

2517 यस्यां स्फुरन्मरकतारुणरत्नहर्म्य-
भित्तिप्रभापटलसंवलिता वहन्ति ।
चन्द्रांशवः कुरबकद्रुमपुष्पताल-
वृन्तश्रियं हरितपाटलतामवाप्ताः ॥४९॥

2518 वैदूर्यपट्टघटितारिरिभिर्निशासु
दूरादपावृतमुखैरिव दृश्यमानैः ।
द्वारैर्बिभर्ति पिहितैरपि यत्र लक्ष्मी-
मभ्रङ्कषा प्रतिदिशं मणिहर्म्यपङ्क्तिः ॥५०॥

2519 प्रतिककुभमयत्नपूर्वमारा-
दुपवनकल्पलतांशुकानि यस्याम् ।
सुरभयति गवाक्षमार्गनिर्यत्-
प्रचुरतरागुरुधूपसौरभश्रीः ॥५१॥

2520 यस्यां विभाति निशि चन्द्रकरावमृष्ट-
हारेन्दुकान्ततरलच्युतमङ्गनानाम् ।
आबद्धबिन्दुपटलाननचन्द्रबिम्ब-
निर्यत्सुधाशिशिरनिर्झरशोभमम्भः ॥५२॥

2521 यत्रेन्द्रनीलवलभीविवराभिनिर्य-
दंशुच्छटापटल-धूसरितानुबन्धाम् ।
धत्तेतरामतनुमत्सरसैंहिकेय-
निष्पीतमुक्तमलिनामिव कान्तिमिन्दुः ॥५३॥

2522 यत्र दधति सुरयुवतयः श्रियं
भास्वदसितमणिभवनसङ्गजाम् ।
व्यूढसलिलभर-जलदमण्डल-
प्रेङ्खदचिररुचिरुचिरविभ्रमाः ॥५४॥

2523 क्लान्तिं रतान्तजनितां श्लथयन्ति यत्र
माणिक्यमन्दिरगवाक्षपथप्रविष्टाः ।
अभ्यर्णवर्ति सुरनिर्झरिणीतरङ्ग-
भङ्गानुसारशिशिरा मरुतोऽङ्गनानाम् ॥५५॥

2524 यस्यां नभश्चरगणेन विदूरदेश-
[1]संस्थेन सालवलयं कलधौतदिग्धम् ।
आलक्ष्यत भ्रमदलातशिखाकृशानु-
[2]लेखानिबद्धपृथुचक्रकरालशोभम् ॥५६॥

2525 यस्यां भूत्यानुज्झितो नीलकण्ठ-
च्छायारम्यो भोगिनाथैरशून्यः ।
धत्ते शोभां देहलीनां गृहौघः[3]
क्ष्माभृत्कन्यामुन्नतात्मेव शंभुः ॥५७॥

2526 दीर्घीकृतामिव विलोचनयोर्युगेषु
सम्पिण्डितामिव कपोलकुचस्थलीषु ।
विस्तारितामिव नितम्बतटे बिभर्ति
लावण्यकान्तिमबलाजनता च यस्याम् ॥५८॥

2527 चन्द्रोदये भवनचन्द्र-मणिप्रणाल-
विष्पन्दमानजलनिर्झर-सिक्तमूलैः ।
यस्यां शिशुपवन-पादप-चक्रवालै-
रालिङ्ग्यते प्रतिदिशं सकलर्तुलक्ष्मीः ॥५९॥

---

१. A, B संस्थानसालवलयं for संस्थेन सालवलयम् ।
२. C लेखानुबद्ध for लेखानिबद्ध । ३. A गृहौघैः for गृहौघः ।

2528 रामाभिरामश्च विदूरजाश्म-
प्रासादराशिर्निशि यत्र धाम्ना ।
हतप्रसर्पन्मृगरूपचिह्न-
तेजस्विमारीचबलश्चकास्ति ॥६०॥

2529 ज्योत्स्नाछटाधवलकेतन-वैजयन्ती-
व्याजेन निर्जितविचित्रपुरान्तरोत्थम् ।
[1]या दिङ्मुखेषु शशिदीधितिपाण्डु मूर्त-
मालक्ष्यते यश इवाविरलं किरन्ती ॥६१॥

2530 निबिडमपि निबद्धारुणा रत्नहर्म्य-
स्थलघटितशिखण्डिव्रातकेकारवार्ता ।
विवलितफणचक्रं यत्र मार्गागतस्य
श्लथयति रथबन्धं भास्वतो भोगिपङ्क्तिः ॥६२॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये स्वर्गभोगवर्णनम् नामैकत्रिंशः सर्गः ।

---

१. B, C या दिङ्मुखेन ।

## द्वात्रिंशः सर्गः

2531 अथ तामविशन्नीलमणि-मन्दिरसङ्कुलाम् ।
विन्ध्यभूमिमिव व्यक्तगण्डशैलां गणाधिपः ॥१॥

2532 पद्मरागमयाट्टालप्रकाशेन प्रथीयसा ।
गगनाम्भोधिगर्भौर्ववह्निना रचितश्रियम् ॥२॥

2533 विचित्र-स्थानकोपेताः सुकुमाराङ्गवर्तनाः ।
नृत्ते चित्रे च दधतीमाक्षिप्तहृदयाः स्त्रियः ॥३॥

2534 पौरैः सदाशेषभोग-भाग्भिर्वैकुण्ठविभ्रमम् ।
बिभ्रद्भिराहिताभिख्यां [1]समुद्रगृहकास्पदैः ॥४॥

2535 दधतीं मध्यम-ग्राम-मूर्च्छना-प्रक्रियामिव ।
सकलोपनतोदार-पौरवीर-चितां श्रियम् ॥५॥

2536 प्रवालपाणिभिर्वल्लीः पाणिपद्मैश्च योषितः ।
पद्माननैश्च नलिनीर्बिभ्रतीमुपशोभिताः ॥६॥

2537 [2]भूयसा तल्पलोपात्तमनोहरतरत्विषम् ।
मातङ्गपृष्ठ-वंशोर्वीमिव विस्तृतदीर्घिकाम् ॥७॥

2538 बिभ्रद्भिर्गेयवैदग्धीमुपकण्ठकृतास्पदैः ।
[3]तालाक्षर-चिताभिख्यैः काननैरुपशोभिताम् ॥८॥

2539 ससूक्ष्मतिलकां [4]वक्त्रच्छायां गारुत्मतीमिव ।
गिरं च सामृतोद्गारां दधतीर्दधुषीं[5] स्त्रियः[6] ॥९॥

---

१. C समुद्रगृहकम्पदैः । २. C omits भूयसा । ३. A तालाख्यचरिताभिख्यैः ।
४. A, B वृक्षच्छाया । ५. C दधतीन्दुयुषी । ६. A omits स्त्रियः ।

2540 अन्तर्युक्तान्महामात्रैः पतद्ग्रहशताकुलान् ।
[1]निशान्तान्दधतीमर्ककृतानकलुषत्विषः ॥१०॥

2541 अदृष्टनिग्रहस्थानां प्रौढवादविधामिव ।
सदाचार्याहितच्छायां [2]नृत्तलीलाविडम्बिनीम् ॥११॥

2542 [3]भिन्नं लयमिव त्रेधा [4]द्रुतमध्यविलम्बितम् ।
वलिभङ्गं दधानाभिः कृतशोभां पुरन्ध्रिभिः ॥१२॥

2543 दशनेन्दुप्रभालोकैः [5]स्वच्छमानसनिर्झरैः ।
मदनस्तबकोद्भेदैः स्त्रीणां [6]हासैर्विराजिताम् ॥१३॥

2544 नक्तं नक्षत्रमालाभिः कृतमूर्धविभूषणैः ।
[7]अलिन्दा नाकुलं हर्म्यं [8]गजैर्विभ्रद्भिराचिताम् ॥१४॥

2545 सत्काञ्चनपरीक्षायाः [9]सदृशीं दृष्टिहारिणीम् ।
निकषोपलसल्लेखामदभ्रां बिभ्रतीं श्रियम् ॥१५॥

2546 शुभप्रस्तावनाढ्यां प्रख्यातोदात्तनायकाम् ।
नानार्थप्रकृतिश्लाघ्यां नाटकप्रक्रियामिव ॥१६॥

2547 व्याप्तां कृतयुगस्थास्नुस्थितिं भोगिभिरुद्धतैः ।
रथसंस्थामिवोष्णांशो रथ्यावलिविराजिताम् ॥१७॥

2548 अनाप्तगोत्रस्खलनामविपक्षामिव स्त्रियम् ।
[10]शुभप्रकृतिविस्तारां वीणावाद्यविधामिव[11] ॥१८॥

अष्टादशभिः कुलकम्

---

१. C निशान्तार्दधती । २. A पत्त्रलीलाबिडम्बिनीम् C ऋतुलीलाविडम्बिनीम् ।
३. C भिन्नालयमिव । ४. C द्रुतमध्यविजृम्भितम् । ५. A स्वच्छानमनिर्झरैः ।
६. A हासैर्विराजितम् । ७. A अलिर्दानाकुलं । ८. A गणैः ।
९. C सदृशीदृष्टि । १०. A, C गुरुप्रकृतिविस्ताराम् । ११. C वीणावाद्यविदामिव ।

2549 सार्धचन्द्रपताकत्वं दधतस्तेन वीक्षिताः ।
तस्यामसंयुता [1]हस्ता इव देवगृहाः पुरः ॥१९॥

2550 [2]व्यलोकि विस्मयवता शुभ-मध्यम-दर्शनः ।
सीमन्तिनीजनस्तेन दधन्माध्यमिकश्रियम् ॥२०॥

2551 स काञ्चनोज्ज्वलास्तस्यां विस्फुरन्मणिबन्धनाः ।
अलङ्कारावलीर्बाहुलताश्चैक्षत सुभ्रुवाम् ॥२१॥

2552 प्राप्तानलसनाथत्वं तेन तत्र गृहावली ।
पटलोपहृतच्छाया दमयन्तीव वीक्षिता ॥२२॥

2553 तेनैक्ष्यत सुधापाण्डु-[3]च्छायसन्मानसालया ।
नगर्या दधती साम्यं क्रीडाकमलिनी पुरः ॥२३॥

2554 महानप्यनहङ्कारप्रसूतिरवलोकितः ।
तारकोऽप्यमुना विभ्रल्लोकोऽनक्षिगतः श्रियम् ॥२४॥

2555 विदग्धमण्डलीमाराद् गोष्ठीबन्धमनोरमाम् ।
[4]सदाकृतिगणोपेतां सद्वृत्तिं स व्यलोकयत् ॥२५॥

2556 तेनाङ्गनाजनस्तस्यामनपेक्षितभूषणः ।
स्वरूपशोभयाक्रान्तः शक्रहस्त इवेक्षितः ॥२६॥

2557 जहर्ष सामान्य-गुण-द्रव्य-संयोगसुस्थिताम् ।
तां कणव्रतसिद्धान्तप्रक्रियामिव वीक्ष्य सः ॥२७॥

2558 सङ्क्रान्तयाञ्जनच्छायदेहप्रतिमयाथ सः ।
प्रविशन् स्फटिकागारानैन्द्रनीलानिवाकरोत् ॥२८॥

---

१. A हस्तामिव, C हस्तमिव । २. C विलोक्य ।
३. A छायममनिसालया । ४. A, C मदाकृतिघनोपेताम् ।

2559 अपूर्वदर्शनाकूत-कुतूहलवलदृशः[१] ।
दितिजास्तं [२]विसृष्टान्यकर्तव्या निरवर्तयन् ॥२९॥

2560 तत्परिज्ञानशून्येन चेतसाहितकौतुकाः ।
पप्रच्छुर्मण्डलीबन्धैः[३] कोऽयमित्यसुरा मिथः ॥३०॥

2561 अन्यैर्विज्ञायमानत्वादन्यस्याभिनिवेदिताम्[४] ।
स शृण्वन्नात्मनोऽभिख्यां राजमार्गानलङ्घयत् ॥३१॥

2562 मुक्ता-प्रवाल-वैदूर्य-प्रायरत्नपरिष्कृताः ।
जहौ निषद्यवीथीः स सिन्धुवेलाविडम्बिनीः ॥३२॥

2563 प्राप्तवानथ दैत्येन्द्रसिंहद्वारं विभूतिमत् ।
त्रैलोक्यसन्निवेशस्य प्रत्यादेशमिव स्थितम् ॥३३॥

2564 सनाग-यक्ष-दैतेय-वस्वादित्य-मरुद्गणम् ।
अनेकाश्चर्यसन्दोहं विश्वरूपमिव स्थितम् ॥३४॥

2565 नानासुरगणाकीर्णं पुरीदर्पणभूतले ।
अदृष्ट-पार-संसार-प्रतिबिम्बमिवोत्थितम् ॥३५॥ तिलकम्

2566 विकासि-किंशुकच्छायाद्वनादिव विभावसोः ।
तत्क्षणापहृतान् पत्त्रशुकानैक्षत सव्यथः ॥३६॥

2567 चन्द्रांशुगौर[५]सत्पक्षबालभारान् प्रचेतसः ।
ददर्श वाहहंसांश्च चामरांश्च हृतानसौ ॥३७॥

2568 चतुर्दिक्स्फटिकागार-प्रभाक्षीरपरिप्लुतम् ।
ददर्श चोच्चैःश्रवसमुत्तिष्ठन्तमिवोदधेः ॥३८॥

---

१. C कुतूहलबलादृशः । २. A विस्पष्टान्यकर्तव्यम् । ३. A मण्डलीवृन्दैः ।
४. C····निवेदितम् । ५. A····सत्पक्ष्म ।

2569 त्रैलोक्यलक्ष्म्याः स दधल्लीलादोलामिवाग्रतः ।
विलोलमुक्ताप्रालम्ब-व्याजेनैक्षत तोरणम् ॥३९॥

2570 ददर्श [1]तोरणामुक्ताश्चण्डीसिंहसटावलीः ।
उत्पातेन्दुकला दैत्यप्रलयाशंसिनीरिव ॥४०॥

2571 [2]अदृश्यमानपर्यन्तानर्पणीयकरानसौ ॥
ददर्श विविधान् राज्ञो दिग्विभागानिवागतान् ॥४१॥

2572 [3]उत्खातशेषमाणिक्य[4]कण्ठकाशून्यकन्धरान् ।
रभसालिङ्गितस्वःस्त्रीस्तनवासाविलोरसः ॥४२॥

2573 भर्तुः प्रसादलब्धानि देवयानानि सत्वरम् ।
निर्गत्यारोहतो दैत्यराजपुत्रान् ददर्श सः ॥४३॥ युगलकम्

2574 [5]अथाधिभूमि विन्यस्तकरजानुभिरादरात् ।
न्यवेद्यत द्वारगतः स भर्त्रे प्रतिहर्तृभिः ॥४४॥

2575 [6]अवज्ञाचिरसंरोधमुक्तयैत्विति तद्गिरा ।
निर्दिश्यमानमार्गस्तैः स दैत्येन्द्रसदोऽविशत् ॥४५॥

2576 भास्वन्मणिशिरोदैत्यभोगिमण्डलसङ्कुलम् ।
तद्देहमलिनच्छायातिमिरप्लवपूरितम् ॥४६॥

2577 वैदूर्यकुट्टिमच्छायजलनिर्भरसंप्लवम् ।
[7]प्रविष्टवानथैक्षिष्ट पातालमिव तत्सदः ॥४७॥ युग्मम्

2578 तत्र सिंहासनासीनं तमालश्यामलत्विषम् ।
स्फुरद्दंष्ट्राननं मूर्तिं कौशिकीमिव बिभ्रतम् ॥४८॥

---

१. C तोरणं ।   २. A अष्टपार ।   ३. C उत्खाताशेष ।
४. A''''कण्ठिका ।   ५. C अथारिभूमि ।   ६. A, C अवज्ञाचिरसंबोध ।
७. A प्रविष्टः क्षणमैक्षिष्ट ।

2579 [1]कुण्डलातपरत्नांशुबालातपविलङ्घितम् ।
विभ्राणमनिमित्तेऽपि[2] रोषारुणमिवाननम् ॥४९॥

2580 चामराधूननव्यग्र-करपङ्कजयानिशम् ।
निषेव्यमाणमभितस्त्रैलोक्यविजयश्रिया ॥५०॥

2581 विभ्राणं शोणमाणिक्य-भूषांशुच्छुरितं वपुः ।
अशान्तवज्रसंपात वह्निशेषमिव क्वचित् ॥५१॥

2582 जयकुञ्जरनक्षत्रमालाममलमौक्तिकाम्[3] ।
दधतं विकटां हारलतां पीनेन वक्षसा ॥५२॥

2583 दिङ्नागदानविष्यन्द-कृतपत्त्राङ्कुरश्रियः ।
बिभ्रतं भुवनाभोगवनतालतरून् भुजान् ॥५३॥

2584 केयूरासितरत्नांशुजलधाराश्च बिभ्रतम् ।
वज्रानलशिखादाहशान्तिहेतोरिव स्रुताः ॥५४॥

2585 उरःस्थले निषण्णाया [4]रत्नपर्यङ्कविभ्रमम् ।
बिभ्रतं दिग्गजाधीशदन्तभङ्गं सुरश्रियः ॥५५॥

2586 ददर्शान्धकमाबद्धमध्यं कनकशृङ्खलैः ।
नितम्बपरिवृत्तार्करश्मिरेखामिवाचलम् ॥५६॥          नवभिः कुलकम्

2587 त्रैलोक्यश्रीकरेणोस्तमालानीभूतदोर्द्रुमम् ।
विलोक्येषन्नतशिरा विनयात्प्रणनाम सः ॥५७॥

2588 अथ बाहुं प्रसार्याराद्दिङ्नागकरपीवरम् ।
इत इत्यसुरेन्द्रेण निर्दिष्टं स्वयमन्तिके ॥५८॥

---

१. A कुण्डलास्पदरत्नांशु ।     २. A बिभ्राणमनिगर्तेऽपि ।
३. A मौक्तिकम् ।     ४. A दन्तपर्यङ्कविभ्रमम् ।

2589 हेमपीठमसौ चित्ररत्नजालपरिष्कृतम् ।
अध्यास्त लोकसंवर्तमेघो मेरुमिवोन्नतम् ॥५९॥ युगलकम्

2590 [1]अथ लम्भितसत्कारं तमुवाचान्धकासुरः ।
दन्त-ज्योत्स्ना-च्छलेनारियशःपीतमिवोद्गिरन् ॥६०॥

2591 गौरीविग्रहसंधानसमासादितनिर्वृतेः ।
गणेश कुशलं कच्चित् अव्याहति पिनाकिनः ॥६१॥

2592 चिरेण बत केनापि हेतुना स्मृतिगोचरम् ।
आगच्छाम वयं शंभोर्येनेह त्वां व्यसर्जयत् ॥६२॥

2593 जयलक्ष्म्योपगूढस्य पुरा जितमरुत्वतः ।
न ममाङ्गेषु [2]सञ्जातस्तादृशः [3]पुलकोद्गमः ॥६३॥

2594 निर्व्याजप्रीतिपिशुनः शशिशेखरशासनात् ।
ईयुषि त्वयि सौहार्दरसस्यन्दिनि यादृशः ॥६४॥ युगलकम्

2595 इमे वज्रकणा हर्षस्फुटद्व्रणमुखोत्थिताः[4] ।
रोमाञ्चोद्गमकार्कश्यमङ्गेष्वधिकयन्ति मे ॥६५॥

2596 सप्तलोकाधिपत्येन न तथोन्नतिमागताः ।
यथाविष्कृतसद्भावभवसंभाविता वयम् ॥६६॥

2597 कर्तव्यं तन्न पश्यामि कृतकृत्योऽपि धूर्जटिः ।
यच्चेतसि निधाय त्वं प्राहिणोदस्मदन्तिकम् ॥६७॥

2598 [5]तदावेद्य सन्देशमिन्दुमौलेर्विवक्षितम् ।
कुतूहलि ददात्यस्मान्मनो नोदासितुं यतः ॥६८॥

---

१. A, C अवलम्बितसत्कारम् । २. A सञ्जातास्तादृशः ।
३. A पुलकोद्गमाः । ४. A स्फुरद्व्रणमुखोत्थिताः ।
५. A, C तदादेशय ।

2599 इत्युक्ते तेन दन्तांशुपुष्पिताधरपल्लवः ।
अवाप्तावसरो वक्तुं दूत इत्युपचक्रमे ॥६९॥

2600 [1]कल्याणीं गिरमुत्स्रष्टुं विरला एव जानते ।
सत्यां रेखां विलिखितुं चित्रकर्मविदो यथा ॥७०॥

2601 यदेवमादरारूढो बहुमानास्पदं त्वया ।
क्रियते कुशलप्रश्नस्तेनाद्य कुशली विभुः ॥७१॥

2602 [2]यशोंशुभासुरच्छायः क्षतदौर्गत्यविप्लवः ।
विभात्यनर्घः संसारसागरैकमणिर्भवान् ॥७२॥

2603 सारम्भत्वेऽपि सततं [3]विस्पष्टपरिघट्टनम् ।
तव जातं द्विषच्चक्रं शुष्कं गेयमिवापदम् ॥७३॥

2604 त्वया नैयायिकेनेव सत्पक्षाश्रयशालिना ।
हेतौ विदधता यत्नं परपक्षो निराकृतः ॥७४॥

2605 उपर्यैव तव स्थास्नु शरच्चन्द्रांशुपाण्डुरम् ।
यशश्छत्रमिवाभाति च्छत्रं यश इवोज्ज्वलम् ॥७५॥

2606 वैदग्ध्यीं विभृयुः शैला [4]निःसारितमरुत्वतः ।
वज्रानलशिखाजालप्लुष्टपक्षाः कथं नु ते ॥७६॥

2607 स्फुरत्यधितटं सिन्धोर्यामुक्ताकिरणच्छटा ।
सा वः सङ्कोचितारिस्त्रीमुखाब्जा कीर्तिचन्द्रिका ॥७७॥

2608 प्लुष्यत्यरीन्प्रतापस्ते निर्वापयति [5]चापरान् ।
दाहात्मकत्वमधिकं वह्नेरैकान्तिकं पुनः ॥७८॥

---

१. A कल्याणी । २. A भास्वरच्छायाकृतदौर्गत्यविप्लवः ।
३. C विमृष्टपरिघट्टनम् । ४. C निःसीमितमरुत्वतः । ५. B चेतरान् ।

2609 क्रूरेऽपि मार्दवोपेता वामाचारेऽपि दक्षिणाः ।
पापेऽपि शुद्धमतयस्त्वादृशा भुवि दुर्लभाः ॥७९॥

2610 अनेकजन्यशोभी त्वं भर्तालङ्कृतविग्रहः ।
त्वमूहिथामुक्तकरामसङ्गोऽपि जयश्रियम् ॥८०॥

2611 दशामनुगुणां दग्ध्वा नाधारं तापयत्यलम् ।
न स्नेहं क्षपयत्युच्चैः वंशदीपोऽपरो भवान् ॥८१॥

2612 व्यजेष्टा गोचरातीतं गुणगौरवतोऽधिकम् ।
अगाधमपि दुग्धाब्धिं सुरासुरविलोडितम् ॥८२॥

2613 कथं शशधराधीनवृद्धिक्षयतयानिशम् ।
सादृश्यं तव दुग्धोदसिन्धुना यशसो भवेत् ॥८३॥

2614 विरलास्त्वादृशा लोके दोर्दण्डदलितद्विषः ।
निर्दग्धाशेषभुवनाः कियन्तो वह्नयः क्षये ॥८४॥

2615 स्वच्छं बिम्बितनिःशेषनीतिसङ्ग्रहसुस्थितम् ।
त्वमेव मानसं धत्से प्रज्ञाविभ्रमदर्पणम् ॥८५॥

2616 दोर्दण्डदलितोद्दामसङ्ग्रामारातिमण्डलः ।
न बिभर्षि गुणोत्तुङ्गो गर्वमन्यासुरेन्द्रवत् ॥८६॥

2617 गुणांस्तव गिरां नाथो वक्ति तेनाथवाप्यलम् ।
सिन्धोस्तटेषु सिकताकणान् गणयितास्ति कः ? ॥८७॥

2618 इति संसदि वक्तुमेँ चित्रं यत्क्षीयते न वाक् ।
क्व वा काव्यविकल्पानां गुणानां च तवावधिः ॥८८॥

2619 इत्थं प्रतापसंपत्तिपराक्रान्तमहीभृतः ।
न कुल्योत्सादनं युक्तं तव ग्रीष्मरवेरिव ॥८९॥

2620 एवमाह विभुर्मान्यं जगत्सर्गस्थितिक्रमे ।
नियुज्य द्रुहिणोपेन्द्रावौदासीन्येऽस्मि निर्वृतः ॥९०॥

2621 सुरासुरचमूवंशसंतानस्थितिरासदत् ।
कश्यपो [1]मानसोत्पत्तिसंमता परमेष्ठिनः ॥९१॥

2622 स लब्ध्वात्मभुवोऽनुज्ञां चित्रसर्गचिकीर्षया ।
उपायतात्मनो योग्या विधिवद्दक्षकन्यकाः ॥९२॥

2623 दनुदित्यदितिष्वासामुदभूवंस्ततः क्रमात् ।
दानवाश्चैव दैत्याश्च देवाश्च बलशालिनः ॥९३॥

2624 प्रातिकूलिकतां मत्वा मिथस्तेषां स्वयंभुवा ।
वासः पातालमूले च सुमेरौ च व्यभज्यत ॥९४॥

2625 प्रशान्तरणसंरम्भं स्वधर्मावस्थितप्रजम् ।
तेन निःशेषमेवासीत्त्रैलोक्यमनुपप्लवम् ॥९५॥

2626 अथ दुर्वारदोर्दण्डदर्पकण्डूप्रतारितः ।
आच्छिनद्धाम देवानां हिरण्याक्षमहासुरः ॥९६॥

2627 स जघ्ने सुरशत्रूणां मिषतां क्रोडमूर्तिना ।
त्रैलोक्योपप्लवारक्षाबद्धकक्षेण[2] शौरिणा ॥९७॥

2628 निन्ये च मरुतां पत्युर्निहत्यासुरमण्डलम् ।
त्रैलोक्यश्रीः पुनर्लीलाचामरव्यग्रहस्तताम् ॥९८॥

2629 याते [3]कालेऽथ दुर्वारदर्पकण्डूतिदुर्धरः ।
हिरण्यकशिपुर्जिष्णोः तामेत्य पुनराच्छिनत् ॥९९॥

2630 तद्वक्षोऽददरद्वज्रधारादलनकर्कशम् ।
नृसिंहमूर्तिर्नखरैः [4]नखरान्तैर्जनार्दनः ॥१००॥

---

१. A, C मानसोत्पत्तिपद्मताम् । २. A, C बद्धकल्येण ।
३. A लोकेऽथ । ४. A, C नखराग्रैः, B न खराग्रैः ।

2631　इत्थमन्यांश्च जगतो विप्रकर्तॄन्महासुरान् ।
अनयद्दीप्तचक्राग्निज्वालापञ्जरयन्त्रणाम् ॥१०१॥

2632　ज्योत्स्ना चन्द्रक्रमेणैव क्षीयते वृद्धिमेति च ।
शूराणां च रणे कीर्तिर्गता न विनिवर्तते ॥१०२॥

2633　तदर्हन्त्यधुना प्राग्वदविग्रहपरिग्रहाः ।
रसातलनिवासेन संविभागं महासुराः ॥१०३॥

2634　पुरेव लोकपालानां दैत्यानां च निरत्यया ।
अनाविष्कृतसंरम्भा स्थितिरस्तु यथायथम् ॥१०४॥

2635　धामान्यध्यूषुषामित्थं प्रेम्णा निजनिजानि वः ।
सन्त्वाविष्कृतविस्रम्भाः परस्परगृहागमाः ॥१०५॥

2636　शासति त्वयि पातालं त्रिदिवं च पुरन्दरे ।
ससुरासुरचक्रस्य त्रैलोक्यस्यास्त्वनामयम् ॥१०६॥

2637　[1]निवर्तिते विरोधेऽपि युवयोरधुना मिथः ।
अपहस्तितनिःशेषवैरं प्रेम [2]विवर्धताम् ॥१०७॥

2638　अतिसङ्घर्षतः सिन्धुमन्दराचलयोः पुरा ।
प्राक्कालकूटसंभारः पश्चादमृतमुत्थितम् ॥१०८॥

2639　इति स्थिते समुत्सृष्टविग्रहैकरसस्थितेः ।
मरुत्वता समं मन्ये सख्यमेव तव क्षमम् ॥१०९॥

2640　यस्य हारलतान्यासभासुरा फेनसंहतिः ।
व्यावर्तमाना नमुचेः कठिनं कण्ठमच्छिनत् ॥११०॥

---

१. A निवर्तताम् ।　　२. C विजृम्भताम् ।

2641 यस्याद्यापि दधत्येते वज्रविच्छिन्नपक्षतीः ।
साभ्राः पार्श्वभुवो बद्धव्रणपट्टा इवाद्रयः ॥१११॥

2642 यस्यान्तर्वज्रदहनज्वालाजालमिव ज्वलत्[1] ।
चकार नीरसं दैत्यनारीहृदयमण्डलम् ॥११२॥

2643 तं दोर्दण्डमदोद्दामदैत्यदानवसूदनम् ।
वज्रोद्भासिकरं को वा मित्रं न बहु मन्यते ॥११३॥　　चक्कलकम्

2644 सुरैः सहामरक्रीडकल्पवल्लीगृहेषु वः ।
आपानगोष्ठीबन्धेन बन्धुप्रीतिर्विवर्धताम् ॥११४॥

2645 सदाननिर्झरेष्वाराद्गण्डशैलेषु दन्तिनाम् ।
अनायाससुखास्तावन्निपतन्तु शिलीमुखाः ॥११५॥

2646 अवाप्तनरकासङ्गा मानुभूवन्महासुराः ।
क्रूरासिपत्रसंपातनिरर्गलकदर्थनाम् ॥११६॥

2647 सुरदितिसुतदैत्यकन्यकानां
सरभसमाप्लुतिकेलिलीलयाम्भः ।
भवतु कुचतटीनितम्बबिम्ब-
स्खलनविजर्जरमम्बरापगायाः ॥११७॥

2648 इत्यभ्युदीर्य गिरमुज्ज्वलदन्तरत्न-
निर्यत्प्रभाधवलितां विरराम दूतः ।
तस्थौ तदुत्तरविशेषपरीप्सया च
दैत्याधिपस्य वदने विनिधाय दृष्टिम् ॥११८॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये दूतव्याहारो नाम द्वात्रिंशः सर्गः ।

---

१. C मिवोज्ज्वलत् ।

## त्रयस्त्रिंशः सर्गः

2649 [1]दैत्याधिपः श्रुततदुक्तवचः प्रपञ्च-
सासूयमानसतयाथ सितस्मितश्रीः ।
प्रस्तावमन्तिकसदो भृगुनन्दनस्य
वक्तुं दिदेश मधुरोद्धतया भ्रुवैव ॥१॥

2650 अभ्युन्मिषत्कनकशृङ्खलचक्रवाल-
रश्मिच्छटापटलविच्छुरितां दधानः ।
कालीं कलिन्दतनयामिव देहकान्ति-
मुल्लासिकालियफणामणिरागभिन्नाम् ॥२॥ युगलकम्

2651 तच्चोदितः स दशनप्रभया सुरारी-
नद्रीन्मृगाङ्क इव चन्द्रिकया विलिम्पन् ।
[2]दूतं शशाङ्कशकलाभरणस्य वाक्य-
मित्थं विमृष्य शनकैरुशना बभाषे ॥३॥

2652 आसन्नवर्तिदनुजेन्द्रशरीरकान्ति-
कल्माषिता तनुरदृश्यत तस्य गौरी ।
स्वच्छात्मता-स्फुटतर-व्रतपीतकुक्षि-
भागस्थधूमपटलेव सभातलस्थैः ॥४॥

2653 दुर्वारवीर्यकरदीकृतविष्टपस्य
सा यस्य पश्यति मुखं चरणाश्रया श्रीः ।
नूनं नतिप्रवणदुर्जयलोकपाल-
पालीकिरीटमणिदर्पणकुण्डलीषु ॥५॥

---

१. A adds ओं in the beginning । २. A दूरे शशाङ्कशकल ।

2654 आभाति यस्य नमिताखिलदिग्लताग्र-
चन्द्रातपामलयशःस्तबकोज्ज्वलश्रीः ।
शौर्यद्रुमो भुवनकाननसीम्न्यराति-
सीमन्तिनीजन-जटादृढमूलबन्धः ॥६॥

2655 प्रेङ्खत्करालकिरणप्रकरा[1] च यस्य
हस्तारविन्दघटिता करवालवल्ली ।
बद्धप्रतिष्ठ-नदराजसुता-कराब्ज-
लोभात् पतद्भ्रमरपङ्क्तिरिवावभासे ॥७॥

2656 सम्भ्रम्य यं प्रणमतां मणिपादपीठ-
निर्घर्षणादिव [2]ललाटतटस्थलीभ्यः ।
दैत्यद्रुहां गुरुणि सत्यपि नाभिमान-
बीजेऽभ्युदैयत पुनर्भ्रुकुटीलताभिः ॥८॥

2657 श्यामीभवत्यनुदिनं रिपुमण्डलस्य
यस्याहवे विरचितो निशितासिपाशैः ।
आक्रान्तदिग्वलयसैनिकचक्रवाल-
निर्धूतभूतलपरागहतेव कीर्तिः ॥९॥

2658 येन व्यलोकिषत संयति वृत्रशत्रु-
लीलानिरस्तकुलिशाग्निशिखा विलग्नाः ।
बाहुद्रुमेषु रुचिराङ्गदपद्मराग-
रत्नप्रभाभ्रमविसंभ्रममाहवेषु ॥१०॥

2659 हेलाविनिर्जितहरेर्न पुरोऽभिधातु-
मस्यास्ति तेऽत्र गणखेट ! खुटङ्क शङ्का ।
इत्थं निसर्गतरलप्रमथप्लवङ्ग[3]-
संसर्गदुर्ललिततासुवचं वचः किम् ? ॥११॥ सप्तभिः कुलकम्

---

१. A, C प्रेङ्खत्करालकिरणप्रचया ।　　२. C ललाटतटस्थलीभ्यः ।
३. C प्रसवप्लवङ्ग ।

2660 प्राग्दर्शितासुर-विनाशविभीषकेण
माधुर्य-[1]संभृतिविशेषजुषा च पश्चात् ।
सन्देशदानवचसा शबलेन तेऽत्र
चेतः कृतं किमपि नः प्रतिपत्तिमूढम् ॥१२॥

2661 दुर्लङ्घ्यसारगहनासु[2] रणाटवीषु
स्थाणाविवाशु विवशं विनिपत्य यस्मिन् ।
चक्रेऽभ्युपेयुषि विवर्तनभाजि भङ्गं
शार्ङ्गायुधो विघटमानमनोरथोऽभूत् ॥१३॥

2662 अन्यः स एष भुजवज्रदृढाभिघात
निष्पिष्टशात्रव-कुलाचलचक्रवालः ।
येनोज्झिता युधि दयामृदुनातिनम्रा
याथार्थ्यमापुरमराः प्रथितस्य[3] नाम्नः[4] ॥१४॥

2663 अस्यारिवंशदहनानुगुणप्रताप-
च्छायैकदेशलवलेशमपूरयिष्यत् ।
धामाधिपो जगति यद्यभविष्यदेष-
न त्वष्टृ टङ्कविनिकुट्टन-घट्टितौजाः ॥१५॥

2664 वक्त्रं यथा स्मितविकासिकपोलभित्ति-
धत्ते न वक्ति च यथा स्फुटमेष किञ्चित् ।
मन्ये भविष्यति तथा सुरचक्रवाल-
दावानलः स्फुरितहेतिशिखासहस्रः ॥१६॥

2665 दूरेऽस्तु तावदथवैष सुरेन्द्रलक्ष्मी-
मस्यानुगेष्वपि [5]महत्सु हरिर्न लब्धा ।
पत्त्रैरपि क्षितिरुहः प्रतिबद्धवृत्ति-
रासादयत्यवनिमुष्णकरातपः किम् ? ॥१७॥

---

१. B संभ्रम । २. A घटनासु । ३. A प्रतितथ्यनाम्नः ।
४. A, C add 'युगलकम्' । ५. A सहत्सु, B महत्सु ।

2666 अध्यासितां पुरमिमामसुरोन्नतेन
संविभ्रतः प्रथितमानपरिग्रहत्वम् ।
न ह्येपयन्ति दनुसूनुभटान् प्रगल्भ-
मेते किमर्ककिरणा अपि लङ्घयन्तः ॥१८॥

2667 छायाविभङ्गकलुषः क्रियते यदिन्दु-
रुष्णत्विषानुदिवसं प्रतिकारशून्यः ।
निर्दह्यते जलनिधिर्वडवाग्निना च
तज्जाड्यजृम्भितमवैमि तयोर्विगर्ह्यम् ॥१९॥

2668 कामं भवन्ति शतशो जगतीह कुल्या-
स्तुल्यानुभावबलता कुत एव तेषाम् ।
आलिङ्ग्यते तदतिरिक्तगुणोदयश्री-
र्यत्सम्पदा तदपि वाच्यपदं जडानाम् ॥२०॥

2669 कालक्रमादधिगतोदयमेकतोऽपि
बीजाङ्कुरात्सपदि यातमधोमुखत्वम् ।
वल्लीकुलाय किमसूयति मूलजाल-
मूर्ध्वावकाशरचितस्थितये तरूणाम् ॥२१॥

2670 पातालमन्दिरतले किमिवात्र कृत्य-
मन्यैर्व्यतीतगणनैः फणिनां शिरोभिः ।
श्लाघ्यं तदेकमपि शेषफणासहस्र-
मुर्वीं बिभर्ति यदशेषगिरीन्द्रगर्वीम् ॥२२॥

2671 विष्पन्दशीतरुचिनिर्झरवारिधौत-
दिक्काः सहस्रगणना ननु सन्ति शैलाः ।
क्ष्मापीठधारणसहाः कतिचित्तु नून-
मव्याहतस्थितिकुलव्यपदेशयोग्याः ॥२३॥

2672 दैत्याधिपः स्मितमुखो विससर्ज सोर्ज-
मावर्जितोऽतिदयया युधि जीवितो यान् ।
रूढत्रया वद रसातलतालुवास-
मर्हन्ति ते किममराः किमथासुरेन्द्राः ॥२४॥

2673 इत्यूचुषि त्रिदशवैरिगुरावमर्ष-
गर्भं विधूनितशिरास्त्रिपुरारिदूतः ।
तुङ्गाभिमान-गिरिनिर्झर-झांकृतेन
वाक्येन पूरितसभागृहमित्यवोचत् ॥२५॥

2674 किं कथ्यते बलवती भवितव्यतात्र
शोच्यं सभातलमिदं दनुजाधिपस्य ।
यस्यासि वत्सरसहस्रनिपीतगाढ-
धूमान्धकारितमतिर्गुरुतामुपास्थाः ॥२६॥

2675 मा भूत्परस्परविरोधिसुरासुरौघ-
संमर्ददुःस्थितमिदं जगदप्यशेषम् ।
उक्तं मयेति यदनुज्झितकृत्यवस्तु
तद्बालिशेन भवतापरथा गृहीतम् ॥२७॥

2676 सर्वत्र वस्तु वितथप्रतिभासमेव
निःसंशयं भवति विप्लवमन्ददृष्टेः ।
मन्दाकिनीसलिलमिन्दुमरीचिगौर-
मुत्प्रेक्ष्यते क्षतजमित्यनिशं पिशाचैः ॥२८॥

2677 अभ्युद्वहन् धवलतामपि शीतरश्मि-
शोभाधरामहितपक्षगतः सुरारेः ।
अत्यन्तवक्त्रहृदयो रणरागमेव
शंसन्विराजसि न शङ्ख इव त्वमित्थम् ? ॥२९॥

2678 निन्द्यानपि स्तुवत एव गुणानुभाव-
[1]वन्ध्यानधिक्षिपत एव विमूढवृत्तेः ।
दुस्वामिनस्तनुभृतामतिदैन्यभाजं[2]
भावानुवृत्तिरसिकामनुजीवितां धिक् ॥३०॥

2679 सम्प्रत्यमी बुधजनस्य न चित्तवृत्ति-
माह्लादयन्ति भवतोऽभिहतप्रकाशाः ।
अद्यापि कुक्षिकुहरास्पदपीतधूम-
श्यामीकृता इव भृगूद्वह वाचि वर्णाः ॥३१॥

2680 अन्तर्दधत्कलुषतामपि जिह्मवृत्ति-
राविष्करोति गुणमेव बहिः [3]प्रकामम् ।
कुक्षिप्रविष्टविषसंहतिरुत्तमाङ्ग-
रत्नप्रकाशमिव गूढपदो विमूढः ॥३२॥

2681 व्यक्तं समाश्रयवशादिह तत्स्वरूप-
शून्योऽपि तत्प्रकृतितां भजते जनोऽयम् ।
श्वासानिलः सरलतामुपयाति वेणौ
शङ्खोदरे कुटिलता पुनरस्य सिद्धा ॥३३॥

2682 यस्याततायिहृदयानि नदन्बिभेद
निःश्वासवातमुखरीकृतरन्ध्रमार्गः ।
सङ्क्रान्तकुक्षिकुहरास्पदसप्तसिन्धु-
सङ्घट्टघोरतरघोष इवाशु शङ्खः ॥३४॥

2683 प्रेङ्खत्कराङ्गुलिशिखाग्रविवृत्तिवेग-
वाताहता जलभृतः ककुभां मुखेषु ।
चक्रस्य यस्य किरणैश्छुरिताः कराल-
धारानिकृत्तदिनखण्डरुचो निपेतुः ॥३५॥

१. A वन्ध्यानपि क्षिपत ।　　२. A भाजाम् ।　　३. A प्रकाशम् ।

2684 लीला हरेरभूत यस्य कठोरकोप-
हुङ्कारपावकशिखा वदनात्स्खलन्ती ।
निःश्वासधूतहृदयास्पदगूढनाभि-
पद्मोच्छ्वसत्कपिशकेसरधूलिलीलाम् ॥३६॥

2685 यस्य स्थितं करहतस्तनपृष्ठसीम-
सीमन्तिनीरुदितशब्दकृतानुबन्धैः ।
अद्यापि पल्लवित-पूरित-पाञ्चजन्य-
शङ्खस्वनैरिव महासुरगेहगर्भैः ॥३७॥

2686 तस्याधिपाणि सुरयौवत-वक्त्रपद्म-
विस्पष्टहासघटनाचतुरार्कबिम्बम् ।
द्रष्टासि कैटभरिपोरसुरेन्द्रकण्ठ-
पीठेषु चक्रमचिरात्परिवर्तमानम् ॥३८॥ पञ्चभिः कुलकम्

2687 नाप्नोति यस्य युधि दानवहेतिघात-
मूर्च्छान्धकारपटलं हृदयेऽवकाशम् ।
ग्रासीकृतोरगसहस्रफणप्रतिष्ठ-
माणिक्यरश्मिभिरिव प्रविलुप्यमानम् ॥३९॥

2688 उच्छ्वासि-काञ्चनपतत्रि-समीरवेग-
विस्रंसितं नभसि शीतमरीचिबिम्बम् ।
येनाण्डखण्ड इति निर्दुधुवेऽङ्गलग्न-
माकम्पितत्रिभुवनं भ्रमताहवेषु ॥४०॥

2689 अद्यापि पक्षपवनो भ्रमतीह यस्य
पातालवर्त्मनि जवेन विचेरुषः प्राक् ।
वैधव्यविक्लवभुजङ्गवधू[1]सहस्र-
सास्रानुबन्ध-गुरु-निःश्वसितापदेशात् ॥४१॥

---

१. A omits वधू ।

2690 प्रत्यग्र-सौरभभराकुलित-द्विरेफ-
[1]मालाहठाहृत-सुधारस-शीकरार्द्राः ।
विभ्रत्सुधौत-कलधौत-पतत्रपङ्क्ती-
र्ज्वालावलीरिव सधूमशिखाः कृशानुः[2] ॥४२॥

2691 तार्क्ष्यो युधि स्वकरलूनपतत्त्रमुक्ति-
संमानितस्फुरदमोघनिपातवज्रः ।
नीलाभ्रकच्छविमुषः कुसृतिप्रगल्भा-
नेकः क्षणात्स दलयिष्यति भोगिनो वः ॥४३॥

पञ्चभिः कुलकम्

2692 निःशेषलोकपरिवर्तविनोददक्ष-
दक्षारिरूक्षतरसा गणसेनयैते[3] ।
यास्यन्ति कामपि दशामसुरा विरुग्णाः[4]
संहारमारुतपरम्परयेव [5]शैलाः ॥४४॥

2693 दिक्स्यन्दिनीषु सुरवारणदानपङ्क-
श्यामीकृतातपजलासु विपन्नपक्षाः ।
मत्ता [6]महासुरझषाः परिदष्टकण्ठ-
च्छेदा भवन्ति न चिरेण समुच्छ्वसन्तः ॥४५॥

2694 तिष्ठन्तु तावदथ वाखिलसप्तलोक-
सञ्चारचातुरजुषः प्रमथाधिनाथाः ।
दोर्दण्डयन्त्र-परिवर्तित-रत्नसानुः
पातालवासमहमेव करोमि किं वः ॥४६॥

---

१. A मालाहठाकृत । २. A कृशाणुः ।
३. A, C गणसेनयैत्र । ४. A, B, C निरुग्णाः for विरुग्णाः ।
५. C शैलः for शैलाः । ६. A, B महासुरकषाः ।

2695 इति कथयति रूक्षालापगर्भं गणेन्द्रे
दितितनयपतीनां क्रोधसंरंभहेतोः ।
करतलहतरत्नस्तम्भपङ्क्तिः सभासा
वमरगिरितटीवोद्धूतकल्पद्रुमासीत् ॥४७॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये भार्गवनिर्भर्त्सनं नाम त्रयस्त्रिंशः सर्गः ।

---

## चतुस्त्रिंशः सर्गः

2696 क्रोधोऽथ तां तिमिरविप्लवमन्ददृष्टि-
रावद्ध-वेपथु-रतिक्रम-योगवृद्धः ।
आवद्धमूर्धविधुतिः श्वसितानुवन्ध-
पारिप्लवाधरदलः शनकैरविक्षत् ॥१॥

2697 अभ्यापतन्नुशनसासुरचक्रवाल-
हुङ्कारधूमनिकरो ददृशे पुरस्तात् ।
आलिङ्गिताखिलवपुर्व्रतकार्यपान-
पर्याप्तसंस्तववशादिव धूमिताकैः ॥२॥

2698 वक्षःस्थलीमलन-संभ्रियमाणधूम-
लेखावलीशबलितां कुपितोऽग्निदंष्ट्रः ।
आलग्न-पीन-दयिताकुचकुम्भपीठ-
कालागुरुप्रकरपत्त्रलतामिवोहे[1] ॥३॥

2699 सङ्ग्रामदोहदरसस्फुटितै रराज
पीनं हिरण्यकशिपोस्तनयस्य वक्षः ।
स्थूलास्थिशृङ्खलनिपातविरुग्णखड्ग
धारारजःकलुषित-क्षतजैर्व्रणौघैः ॥४॥

2700 क्रोधान्मयेन रचिता भ्रुकुटिः किरीट-
माणिक्यरश्मिकपिश-श्रमवारिबिन्दुः ।
संहारकालरजनीव रराज सान्ध्य-
रागच्छटारुणित-तारकमण्डलश्रीः ॥५॥

---

१. B वभारे (footnotes) ।

2701 कर्णावतंस-विकचोत्पलकान्तिभिन्न-
संरंभ-पाटल-कपोलतलोऽसकूटम् ।
राकाप्रदोष इव राहुपरिप्लुतेन्दु-
बिम्बः करेण शतदुन्दुभिराहतोच्चैः ॥६॥

2702 स्वेदाम्बु-शीकर-कणप्रकरावकीर्ण-
[1]वक्षःस्थलव्रणदरीकुहरो विकुम्भः ।
दध्रे विभिन्नकरिकुम्भमृगारिहस्त-
विस्रस्त-मौक्तिक-गुहागृहशैललीलाम् ॥७॥

2703 सोत्सेकमत्सरधियोऽनलतारकस्य
निष्पेतुराहवरसस्फुटितव्रणेभ्यः ।
वक्षःस्थलीविकटवप्रतटाभिघात-
भग्नामरद्विरदराजविषाणखण्डाः[2] ॥८॥

2704 संरंभभासुररुचो हरिकन्धरस्य
वक्त्रेण संभृतरुषः स्फुटहासभासा ।
उद्गीर्णदग्धसलिलार्णवभस्मधूलि-
सन्तानवाडवमुखानुकृतिर्विदध्रे ॥९॥

2705 आताम्रदृष्टि-किरण-च्छुरिताच्छघर्म-
वारिच्छटाकणफणामणिरुल्लसन्ती ।
छायाकलिन्दतनयाजल-जालमध्य[3]-
मग्ना कलेर्भ्रुकुटिकालियमूर्तिरासीत् ॥१०॥

2706 राहोरलक्ष्यत मुखं दृढदन्तयन्त्र-
निष्पेष-धूममलिनीकृत-तालुमूलम् ।
दैत्याधिपैः कवलितेन्दुकलङ्कपङ्क-
संसर्गधूसरमिव प्रविजृम्भमाणम् ॥११॥

---

१. B वक्षस्थलीव्रणदरी । २. B दण्डाः ।
३. B जलमध्यजाललग्ना ।
C जलमध्यजालमग्ना ।

2707 सिंहीसुतो दशनपट्ट-विघट्टनोत्थ-
धूमच्छटा भुजगनायकभोगदीर्घाः ।
ग्रासीकृतस्य शशलक्ष्मभृतः कलङ्क-
लेखा इवोदगिरदन्तरितान्तरिक्षाः ॥१२॥

2708 निष्ठ्यूतया कवलितामृतधारयेव
वक्त्रान्तरालभुवि भूरिभरादमान्त्या ।
तस्यातिनिष्ठुररुषो विकटाट्टहास-
भासावभासित-सभाभवनं बभासे ॥१३॥

2709 स्वेदाम्बुकर्दमित-चूर्णिततारहार-
धूलिच्छटाधवलिता तनुरिन्दुकेतोः ।
विन्यस्तचन्दनरसेव रराज वैरि-
लक्ष्मीसमागम-समुत्सुकमानसस्य ॥१४॥

2710 जृम्भाविकासिगुरुमत्सरदुर्निरीक्ष्य-
मातास्रमाननमराजत वज्रबाहोः ।
औत्पातिकं विकटरन्ध्रनिरुद्धमध्य-
मुद्रश्मिमण्डलमिव स्फुटमुष्णधाम्नः ॥१५॥

2711 कालान्तकस्य सकलारिकुलक्षयाय
धूमच्छटा मलयतोऽथ ललाटपट्टम् ।
पुष्पावतंस-विगलन्मकरन्दबिन्दु-
पानार्थिनी मधुपपङ्क्तिरिव न्यपप्तत् ॥१६॥

2712 रोषारुणेक्षण-मरीचि-विलङ्घ्यमान-
जिह्मोत्कटभ्रुकुटि [1]वह्निशिखस्य वक्त्रम् ।
अन्तर्विषानलशिखाशतपिङ्ग्यमान-
कालोरगाद्रिशिखरश्रियमाससाद ॥१७॥

---

१. B वज्रशिखस्य for वह्निशिखस्य ।

2713 अभ्युन्मिषच्छिखिशिखापटलं सुबाहु-
रन्योन्य[1]बाहुमलनेन करद्वयस्थम् ।
त्वष्टा विटङ्कतरटङ्कनिकुट्टनोत्थ-
माधत्त चक्रघटनार्थमिवार्कतेजः ॥१८॥

2714 संरम्भिणः क्षितिसुतस्य कठोरकोप-
रागारुणच्छवि विलोक्य वपुस्तदानीम् ।
दैत्याधिपाः क्षणमशङ्किषतानपोढ-
गाढोरुगर्भशयनक्षतजच्छटार्द्रम् ॥१९॥

2715 टाङ्कारयन्विकट-कुट्टिम-पट्टपृष्ठ-
मङ्गुष्ठकोटि-दृढटङ्ककठोरघातैः ।
नष्टाष्ट-दिक्तटतमश्छट-मट्टहास-
मट्टालकूट-भिदुरं व्यधिताग्निदंष्ट्रः ॥२०॥

2716 चक्रेऽतिगाढकरपिष्टकरालहार-
तारावलीविलुलितातनुचूर्णपूर्णम् ।
वज्रव्रणौघमवचूर्णनकाम्ययेव
संरम्भगर्भरभसस्फुटितं[2] विदर्भः ॥२१॥

2717 क्ष्मामण्डलं विभिदिवान् गुरु पार्ष्णिघात-
पातेन कोपकलुषोऽथ हिरण्यनेमिः[3] ।
चक्रे रसातलमदृष्टचरार्कबिम्ब-
सन्दर्शनाकुल-कुतूहलिकाद्रवेयम् ॥२२॥

2718 विस्पष्टजिह्मतर-चेष्टित-चित्तवृत्ति-
रुत्सृष्टसाधुचरित-प्रतिपत्तिदुष्टः ।
क्रोधः क्षणादविनयैकरसोऽभ्यसूयां
कुर्वन् मृगाङ्कमुकुटे नरकं जगाहे ॥२३॥

---

१. C अन्वोन्यगाथमलनेन । B गाढमलनेन for बाहुमलनेन ।
२. B स्फुरितं for स्फुटितम् । ३. B हिरण्यबाहुः for हिरण्यनेमिः ।

2719 वक्षःस्थली-लुलित-हार-मृणालदण्ड-
खण्डः प्रकोपमहिषेण विगाह्यमानः ।
छायाजलौघकलिलः कलुषाकुलश्री-
रुद्दामचेपथुरथेल्वलपल्वलोऽभूत् ॥२४॥

2720 संवर्तकस्य करवज्रशिखानिपात-
पिष्टाङ्गदांसशिखरोत्थित-धूमकेतुः ।
चामीकरोत्थमपरं बिभराञ्चकार
केयूरबन्धमिव संसदि बाहुदण्डः ॥२५॥

2721 दष्टौष्ठपृष्ठ-विकटभ्रुकुटी-कराल-
ताम्राननस्य करसंपुटपेषजन्मा ।
अन्तःस्थ-शेषफण-रत्ननिधानभूमि-
पीठे पपात शरभस्य कृशानुवर्तिः ॥२६॥

2722 संहारमारुतधुत-प्रलयाग्निहेति-
तालूरचक्र-परिमण्डल-चक्षुषोच्चैः ।
विन्ध्यासुरेण भयकातरदैत्यदृष्टां
चण्डीं रुषं धृतवता परुषं जगर्जे ॥२७॥

2723 पादाभिघातदलितं क्षितिपीठबन्ध-
मग्रेऽनुसंधिरभसादिव कालचक्रः ।
चक्रेऽतिगाढ-करसंपुट-पिष्टहार-
तारावलीलुलित-धूलिकणावकीर्णम् ॥२८॥

2724 अभ्युच्चताम करतामरसावमृष्ट-
तिम्यल्ललाटफलकोऽस्तमयाय शत्रोः ।
आताम्रदृष्टिरतिमत्सरतस्तमाल-
नीलच्छविः कृततमीतिमिरोऽतिमायः ॥२९॥

2725 स्वेदोद्‌बिन्दु-शबलोष्म-विलीनमौलि-
विष्यन्दिहेमरसमिश्रतया ललाटे ।
भ्रूभेदराजिरजितस्य रराज कोप-
लीलापुरन्ध्रि-चटुलातिलकायमाना ॥३०॥

2726 [1]प्रेङ्खन्नखांशुपरिकल्पित-कण्ठदाम-
दुर्दर्शनः परिममर्श करेण कोपात् ।
वज्राभिघात-विकटव्रणबद्ध-संस्थ-
विच्छिन्न-हारकण-कर्बुरकान्ति वक्षः ॥३१॥

2727 दिक्चक्रवालमनघस्मरघस्मरेन्दु-
मौलीक्षणस्मरणसंभृतसंभ्रमार्द्रम्[2] ।
क्रोधाग्निदीप्रतरतारकतारकाक्ष-
[3]काक्षेक्षितं न [4]कथमप्यशनैरधाक्षीत् ॥३२॥

2728 जृम्भाविकासिमुखकंदरदृश्यमान-
जिह्वालतः सपदि विह्वलयन् सुरारीन् ।
आवर्तगह्वर-परिस्फुरित-प्रवाल-
वल्लीकरालजलधिश्रियमाप [5]धुन्धुः ॥३३॥

2729 वज्रप्रभेण विकटादुरसो विलूय
मुक्ताफलस्तबकदाम विकीर्णमूर्ध्वम् ।
आसन्नदेशरचितस्थिति शीतरश्मि-
तारापुरंध्रिपरिवारविलासमापत् ॥३४॥

2730 क्रोधोद्धत-भ्रुकुटिबन्ध-कबन्धवक्त्र-
च्छायान्धकारविसरप्रसरोपघातम् ।
चक्रुःकरालदशनांशुशिखासहस्र-
शोभाभृतः सपदि केतुमतोऽट्टहासाः ॥३५॥

---

१. A नखांशुभर ।　२. A संभ्रमसंभ्रमान्तम् ।　३. B काक्षेक्षितञ्च ।
४. B, C कथमप्यस्यशनैः ।　५. B बन्धुः ।

2731 वज्रानलोऽप्यनलभासुरघोरदृष्टि-
पातैर्दहन्निव जगद्गुरुमत्सरश्रीः ।
स्मेरः सविभ्रममविभ्रमदुद्गतांशु
चक्राहितार्कपरिधिं करपद्मशाखाम् ॥३६॥

2732 तेन क्रुधा दुधुवुषोद्धतमुत्तमाङ्ग-
मुल्लासिभिः कनकमौलिमरीचिचक्रैः ।
दृष्टव्युदस्तरविरश्मिरिव व्यधायि
सम्भ्रान्तखेचरगणा दिवसस्य लक्ष्मीः ॥३७॥

2733 सम्भ्रमुषा सुरगणेन विलोकितोऽथ
जीमूतकेतुरभिनन्दितसंप्रहारः ।
हारान्सलीलमलुनात्तरुणार्कबिम्ब-
दुर्दर्शलोचननिपीततदातपश्रीः ॥३८॥

2734 मूकोऽपि भ्रुकुटितरङ्गितं ललाटं
बिभ्राणः करतलताडितांसकूटः ।
संरम्भस्फुरदरुणेक्षणो जगर्ज
क्रोधान्धो बधिरितसप्तलोकमुच्चैः ॥३९॥

2735 विवर्तिताधर-विकसत्कपोलभू-
र्विचिन्तिताहित-रणलाभहर्षुलः ।
[1]विकोपितोभयपुट-फुल्लतारका-
ममर्षणो दृशमनिमेषिणीं दधौ ॥४०॥

2736 विश्रब्धमैच्छदवसादित-वासवोऽस
विस्रंसमानवसनः सवसावसेके ।
व्यंसांसुरश्रिरमविस्रस-विस्रुतास्र-
विस्रावनावसिकरः समरे विसतुं म् ॥४१॥

---

१. C विकासितोभय ।

2737 प्रह्लादो विकटविटङ्कदंष्ट्रमास्यं
बिभ्राणः करतलताडितांसकूटः ।
दिग्भित्तिप्रतिफलिताट्टहासभासा
संहारे हर इव दत्तसम्भ्रमोऽभूत् ॥४२॥

2738 दिक्सुन्दरीस्फुटनवांशुकमिन्दुगौर-
मानन्दनिर्भरसिवारियशः पिपासुः ।
व्यादादमन्दमथ कन्दरकल्पमास्य-
माताम्रतालु शतदुन्दुभिरात्तजृम्भम् ॥४३॥

2739 पादाघातैर्दानवचक्रस्य तदानी-
मापातालं दृष्टगभीरातनुरन्ध्रा ।
साभ्रूयस्य क्रोधवशादिन्दुकिरीटे
पुस्फोट क्ष्मा रौरवपातार्थमिवारात् ॥४४॥

2740 सिंहासनादसहनः सहसोज्जिहासु-
रुत्साहसाहसरसेन [1]सहस्रमायः ।
हंसांसहारिहसितः सहसारिहिंसा-
सज्जाहवो युधि जहर्ष जहास चोच्चैः ॥४५॥

2741 संरम्भघोरतर-हुङ्कृति-धूमकेतु-
हेतिस्फुलिङ्गनिकरैरशनिप्रभस्य ।
[2]प्रत्यूयिरे [3]सपदि हारलता मुहूर्त-
माताम्ररत्न[4]निकरैरिव दानवानाम् ॥४६॥

2742 कृत-भुवनविनाशाशङ्क-हुङ्कारगर्भाः
सपदि परुषरोषाविष्कृतेः सूचिरोम्णः ।
मधुकरकुल-नीलच्छायतस्तारकाग्रा-
ज्जलभृत इव विद्युन्निष्पपातोज्ज्वलार्चिः ॥४७॥

---

१. C सहस्रसायः for सहस्रमायः । २. A प्रत्यूषिरे ।
३. B, C सदसि for सपदि । ४. C पटलैरिव ।

2743 गीर्वाणराजपृतनाः [1]सविचित्तवीर्य-
सारस्तदाहवनिरर्गलचित्तवृत्तिः ।
नाचिन्तयत्कुरुचमूरिव पाण्डुसूनु-
रुच्चावचास्त्रचतुरो युधि विप्रचित्तिः ॥४८॥

2744 कुलगिरिगरिसंस्थानल्पकायोऽतिमायः
करकुलिशतलेनास्फालयन् भूतधात्रीम् ।
गुरुतरभरताम्यद्दिग्गजस्कन्धपीठी-
लुठितविधुरसंस्थारुग्णबन्धां चकार ॥४९॥

2745 चक्षमायिरे क्षितिभृतः करपिष्टहार-
मुक्ताशिलाशकलकर्कशशर्कराभिः ।
अभ्याहताः क्षय इवासुरचक्रवाल-
निःश्वासदुर्धरसमीरपरम्पराभिः ॥५०॥

2746 संक्षोभ-विभ्रम-विशीर्ण-विकीर्ण-हार-
मुक्ताफलाच्छकरका-कणचक्रवालम् ।
अभ्युत्पतद्दितिसुतस्तनयित्नुचक्र-
माक्रान्तकृत्स्नभुवनत्रितयं तदासीत् ॥५१॥

2747 करतलमलनोत्थं मन्थरीभूतभानु-
प्रभमनलमनल्पज्वालमालाकरालम् ।
सकलममरवंशं दग्धुमुत्पादयन्तु
क्षयतरणिदुरीक्ष्यश्चुक्षुभे काञ्चनाक्षः ॥५२॥

2748 बिभ्रत्युदारतर-मानसदृश्यमूक-
शैलक्ष्मारभसलङ्घनदुर्धरत्वम् ।
मत्ता वलीमुखवरूथवतीत्र दृष्ट[2]-
दैत्याधिराजगुरुमत्सरविक्रियासीत् ॥५३॥

---

१. A सविचित्रवायु ।　　२. A दृप्टा for दृष्टि ।

2749 तेषामरोचिषत चूर्णितपद्मराग-
रत्नाङ्गद-प्रकरपाटल-धूलिदिग्धाः ।
[1]स्पष्टाट्टहासचलितातनु-सन्धिबन्ध
विष्यन्दिसान्द्ररुधिरा इव दिग्विभागाः ॥५४॥

2750 कल्माषिताम्बरतलाः प्रलयावतार-
शङ्काकुलीकृत-जगत्त्रयदृश्यमानाः ।
उल्कालता ववृषिरे वृषराजकेतु-
[2]संरम्भ-भासुर-सुराहित-दृष्टिपातैः ॥५५॥

2751 विष्यन्दमान-परिपीत-विपक्षखड्ग-
धारानिपातसलिला इव दानवानाम् ।
स्वेदाम्बुशीकरमुचो विबभुर्विशाल-
वक्षःस्थलीषुच विकटव्रणकन्दरौघाः ॥५६॥

2752 आसन्नसंयुगतया सुमनीबभूवु-
रुच्चैस्तरां जहसुराहसतांसकूटान् ।
हारांश्च चुक्षुदुरुदस्थुरथासनेभ्यो
मृत्योरपि क्षतभियो न शशङ्किरेऽन्ये ॥५७॥

2753 सब्रह्मधूर्जटिहरींस्त्रिदशांस्तृणाय
विस्पष्टमत्सरधियो युधि मन्यमानाः ।
दैत्याधिपाश्चक्रमिरे कमलासनाण्ड-
मुत्प्लुत्य [3]पाटयितुमुत्कटरोषरूक्षाः ॥५८॥

2754 ते राहुकोपजनितप्रतिपक्षपक्ष-
[4]संहारभीतिभिरपाकृतधैर्यबन्धैः ।
आस्थान्यसौ सुररिपोर्विभराञ्चकार
[5]दुर्धर्षतां यदुपतेरिव वृष्णिसैन्यैः ॥५९॥

---

१. C स्पष्टाट्टहासदलिता । २. B संरम्भभास्वर । ३. पातयितुं ।
४. A, C संहारभूरिभिः । ५. A दुर्दर्शताम् ।

2755　इत्थं रुषेन्धनविनाकृतमप्यधूम-
मूर्ध्वेक्षणं स्मररिपोरिव दग्धकामम् ।
जज्वाल दानवसदः प्रलयार्कबिम्ब-
दुर्दर्शघोरघटितानलतारकं तत् ॥६०॥

2756　विदधुरवसरेऽत्र दैत्यचक्र-
प्रलयपरिस्फुटपैशुनोत्थितानि ।
सकल-भुवनमण्डलेऽप्यसक्तं
भयमनिमित्तशतानि दारुणानि ॥६१॥

2757　प्रतिदिनमपवर्गद्वाररन्ध्रादमन्दं
दिनकृत इव बिम्बादर्गला-दीर्घदण्डाः[1] ।
प्रतिककुभमकल्काः पेतुरुल्काः क्षयाग्ने-
र्भुवन-दहनहेलासूत्र-पातायमानाः ॥६२॥

2758　त्वष्टृटङ्कघटना-निकुट्टित-
ग्रावसार-विकटास्थि-संभवम् ।
धूमराशिमिव भानुमण्डले
लग्नमैक्षत कबन्धभासुरम् ॥६३॥

2759　निर्गच्छन् रजनिकरस्य बिम्बमध्या-
दुत्पातप्रसरवशेन　धूमदण्डः ।
वैदग्धीं कुवलयदामनीलभासः
खड्गस्य व्यधित विलग्नदत्तमुष्टेः ॥६४॥

2760　उत्पात-धूममलिनैर्निजकोषचक्र-
गर्भच्युतैः परिणतिं समुपेयिवद्भिः ।
आकीर्यताशु कमलासनपुण्डरीक-
बीजैरिवाम्बरतलं ग्रहचक्रवालैः ॥६५॥

---

१. दण्डदीर्घाः ।

2761 अभिमुखपतिनाशाशङ्कयेव प्रदीप्तं[1]
विविशुरनलमाशा दाहयुक्त्या तदानीम् ।
स्फुरितविकटकेतुव्याप्तदिक्चक्रवालं
गगनमपि भविष्यत्संयुगच्छायमासीत् ॥६६॥

2762 क्षुभित-विषम-वेलोद्दाम-रत्नाकराणि
क्षयतरणिरुचो नाजीगणंस्तानि दैत्याः ।
प्रतिककुभमकाण्डोड्डामराखण्डलश्री-
हरण-रभसकण्डूचण्डदोर्दण्डखण्डाः ॥६७॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये अन्धकासुरसभाक्षोभो नाम चतुस्त्रिंशः सर्गः ।

---

1. C प्रदीप्ता ।

## पञ्चत्रिंशः सर्गः

2763 इत्याहित-त्रिभुवनक्षय-संभ्रमार्ति-[1]
दिक्चक्रवाल-गगनक्षितिगोचरेषु ।
उत्पातविप्लवशतेषु समुद्भवत्सु
तस्मिन् क्षणे प्रलयशंसिषु दानवानाम् ॥१॥

2764 संरम्भगर्भगुरुनिःश्वसितानिलोत्थ
धूमच्छटाभिरसुराधिपमण्डलेषु ।
मेघावलीभिरभितः स्थगयत्सु लोक-
संवर्तदुर्दिनमुखेष्विव [2]दिग्विभागान् ॥२॥

2765 [3]दष्टौष्ठपट्ट-विकटभ्रुकुटीविभङ्ग-
मावेगनिर्धुतशिरः स्मरवैरिदूतम् ।
पश्यत्सु जिह्ममनलोल्बणदृष्टिपात-
प्लुष्टप्रकीर्णकशिखं दितिजाधिपेषु ॥३॥

2766 अन्तः प्रकोपदहनोद्धत-हेतिदाह-
भीत्येव कण्ठविकचोत्पलमालिकासु ।
वक्षःस्थलीनिकषणोत्थ-कृशानुधूम-
व्याजात्पलायनपरायणतां [4]गतेषु ॥४॥

2767 अद्यैव तेऽस्तु निधनं सदसीत्यशक्ल-
क्लिष्टाक्षरं निगदतः क्रमयोगशून्यम् ।
सन्तर्जयत्सु तरलीकृततर्जनीक-
मित्थं गणाधिपतिमाहवदुर्मदेषु ॥५॥

---

१. B omits संभ्रमार्ति । २. C दिग्विभागम् । ३. पृष्टौष्ट ।
४. B गतासु ।

2768 संरम्भ-गाढवलिताङ्गुलि-पल्लवाग्र-
मुद्गूर्य मुष्टिमपरेषु रुषाभिहन्तुम् ।
उत्थाय दष्टविकटौष्ठमवध्यदूत-
बुद्ध्या शनैरुपविशत्सु निजासनेषु ॥६॥

2769 अन्येषु धीरललितस्थिति कृत्यवस्तु-
चिन्ताप्रवेश-विवशीकृत-शेमुषीकम् ।
संरम्भशून्यममरारिषु निस्तरंग-
भङ्गोर्मिमालिसदृशीं श्रियमाश्रितेषु ॥७॥

2770 प्रेमानुबन्धि-परिमार्जनलग्नराज-
लक्ष्मीदकूलपटपल्लवविभ्रमाभिः[1] ।
विभ्राजितेन नखदीधितिमञ्जरीभि-
राक्रम्य पादफलकं चरणेन हैमम् ॥८॥

2771 चेतोहरस्मित-विकासि-कपोलभित्ति-
भ्रूक्षेपलोल-ललिताङ्गुलिहस्तचेष्टम् ।
चन्द्रांशुगौररुचिकल्पलतादुकूल-
पर्यङ्कबन्धविकटोन्नतपीनवक्षाः ॥९॥

2772 दैत्याधिपो मुखरिताखिल-दिङ्मुखेन
वाक्येन दानवचमूपतिकर्णकुक्षीन् ।
आपूरयन् प्रलयमेघ इवाद्रिरन्ध्र-
भागान्विशेष[2]परुषाक्षरमित्यवादीत् ॥१०॥ दशभिः कुलकम्

2773 किं सांप्रतं तरलदूतवचःप्रपञ्चै-
रेभिः किलाकुलितसत्त्वधियः स्थ दैत्याः ।
सम्भाव्यते शिखरिणां न हि मुग्धपत्रि-
शब्दश्रुतिक्षुभितकेसरिकन्दरत्वम् ॥११॥

---

१. C विद्रुमाभिः for विभ्रमाभिः । २. A परुषात्तर इत्यवादीत् ।

2774 एतेन दूतवचसापि विजृम्भमाण-
संरम्भमेतदवलोक्य सुरारिचक्रम् ।
शङ्के कुलाचलकुलं कलविङ्कपोत-
पर्यस्तपक्षपवनाहतिबद्धकम्पम्[1] ॥१२॥

2775 यद्बालभावसुलभं शशलक्ष्ममौलि-
दूतोऽभ्यधादयमशङ्कितचित्तवृत्तिः ।
वक्तुं क्षमं पितृगृहे तदशेषमेव
श्रोतास्ति यत्र रभसेन स मातृवर्गः ॥१३॥

2776 त्रैलोक्यसारगुरुधाम [2]सदः किलैत-
न्नैव श्मशानमशिवात्म शिवाशवाढ्यम्[3] ।
दैत्या इमे रिपुकुलाचलचक्रवाल-
निष्पेषकल्पमरुतो न गुणप्लवङ्गाः ॥१४॥

2777 दैत्याधिराजविनिपातविभीषिकाभि-
रभ्येत्य भाययसि दूत ! दितेः सुतान्यत् ।
तद्व्याहतं लघुघनाघनमुक्ततोय-
धाराभिरेति न यतः शममौर्ववह्निः ॥१५॥

2778 निर्जित्य संयुगमुखे सुरराजचक्र-
मप्यात्मसाज्जगदकारि यदैव दैत्यैः ।
क्वासौ तदा समभवत् कथयेन्दुमौलिः
स्कन्दोऽथवा क्व नु गुणः [4]क्व नु ते क्व नन्दी ॥१६॥

2779 आश्वासयन्नसिलतावन-तालवृन्त-
वातैर्नृसिंहनखरक्षतविग्रहां ये ।
लक्ष्मीं पुनर्दितिजराजकुलस्य काल-
दण्डप्रचण्ड-परिपीवरबाहुदण्डाः ॥१७॥

---

१. B, C हतिबद्धकक्ष्यम् ।　　२. C सदा ।　　३. शिवाशताङ्क्यम् ।
४. B, C क्वच तेऽथ नन्दी ।

2780 [1]किं तैर्न नन्दनगतैर्दयिताजनस्य
गीर्वाणपौरुषमिव स्वरुचा हसन्ती ।
आपानबन्ध-मुदितैरपनिद्ररत्न-
पुष्पावतंसरचना क्रियतेऽसुरेन्द्रैः ॥१८॥ युगलकम्

2781 किं वावलोकनकुतूहलिभिस्त्रिलोक्या-
मारुह्य बाहुजितदेवविमानवीथीः ।
नाभ्राम्यतासुरभटैः समरात्तगन्ध-
गन्धर्वकिंपुरुष-गीतविनोद्यमानैः ॥१९॥

2782 माणिक्य-पुष्पभरमन्थर-कल्पवल्ली-
लीलागृहोदरगतैर्हरदूत ! दैत्यैः ।
किं नान्वभूयत विदग्धविलासदिग्ध-
मुग्धारिवारवनितारतकेलिलीला ॥२०॥

2783 किं वा न विभ्रमविभूषितदैत्यनारी-
हस्तारविन्दपददुर्ललितो गृहान्तः ।
अध्यावसन् करविमृष्टकलङ्क एति
याथार्थ्यमेव गृहचन्द्र इति स्म चन्द्रः ॥२१॥

2784 किं वावरोधनवधूदयितत्त्वपक्ष-
पातात्सुरैः सततसन्निहितीकृतार्काः ।
स्वाधीनवल्लभतया प्रतिपन्नहारि-
हासा व्यलोकिषत नो न गृहाम्बुजिन्यः ॥२२॥

2785 पिङ्गस्फुरत्किरणकेसरशारिताशा-
स्मेरस्य नो किमुपदीक्रियते सुरेन्द्रैः ।
उत्खातशेषफणभृत् फणचक्रवाल-
माणिक्यपुष्परचिता मम मङ्गलस्रक् ॥२३॥

---

१. C किं तेऽत्र for किं तैर्न ।

2786 विस्पष्ट-संहृत-निरर्गल-सप्तलोक-
[1]पूरप्रगल्भरसिता मृदुमञ्जुगर्जाः ।
किं मे न यामपटहत्वमवाप्नुवन्ति
सौदामनीकनककोणभृतः [2]क्षयाब्दाः ॥२४॥

2787 प्रालेयशैलतट-काननदेवताभि-
रभ्येत्य नो मृगमदागुरुकुङ्कुमेन ।
सम्पाद्यते किमवरोधवधूजनस्य
दैत्याधिराजपुरि विभ्रममण्डनश्रीः ॥२५॥

2788 दैत्याधिपैर्युधि जितस्य मृणालसूत्र-
गर्भे स्थितिर्भयवशात्पुनरत्र मा भूत् ।
नोन्मूलिताः किममराधिपतेरितीव
मद्दन्तिभिर्भवनकाननपङ्कजिन्यः ॥२६॥

2789 किं वा विघट्टनविरुग्णसुपर्णकेतु-
नाभीह्रदाम्बुजजरद्बिसदण्डखण्डैः ।
दैत्यैरपुष्यत मम व्यपहृत्य हर्म्य-
वापीषु न द्रुहिणघोरणहंसपङ्क्तिः ॥२७॥

2790 विस्पष्टभङ्गलघुचापलतापरीतः
स श्रीफलैकरसिको हरिराहवाग्रे ।
स्थैर्यं बिभर्ति कुत एव विशङ्कटेषु
दैत्याधिराज-करवाल-लतागृहेषु[3] ॥२८॥

2791 चिन्ताभरानतमुख-प्रतिबिम्बलग्न-
लोलैककुण्डलसितेतररत्नखण्डम् ।
तस्या चिरेण दयिता वहति स्तनं श्री-
विंश्रान्तषट्चरणचक्रमिवारविन्दम् ॥२९॥

---

१. C पूरप्रलम्भरसिता ।	२. C क्षयार्काः for क्षयाब्दाः ।
३. C नतावनेषु for लतागृहेषु ।

2792 लक्ष्म्या भविष्यति रणे भयबद्धकम्प-
लोलाङ्गुलिश्लथगृहीतकरालनालम् ।
विस्रंसि सान्द्रदलमण्डलपक्ष्मखण्ड-
मुत्कर्णिकं तदपि विभ्रमपुण्डरीकम् ॥३०॥

2793 प्रत्यग्र-मेचकरुचिर्विकराललोल-
कल्लोल-पीवरकराहत-पुष्करश्रीः ।
स्वच्छन्दमेव चक्रषे सहसाशु येन
सीराङ्कुशेन करिणीव कलिन्दकन्या ॥३१॥

2794 संख्ये जितस्य हलिनोऽपि मयैति तस्य
नूनं [1]त्रपाभरविहस्ततयोत्तमाङ्गम् ।
अन्तर्निगूढमणिशारशिरःसहस्र-
भारातिगौरववशादिव बन्धुरत्वम् ॥३२॥ युगलकम्

2795 क्रीडापतत्त्रिरभसोत्थजिघृक्षयारा-
त्क्षिप्तो मयापि विनतातनयस्य तस्य ।
पाशः प्रसादनविलग्न-भुजङ्गभोग-
लीलां पुरैति चरणाङ्गुलिकोटिलग्नः ॥३३॥

2796 कोदण्डमण्डलकटुक्वणितं मदीय-
मायोधने श्रुतवतो हृदयात् स्मरारेः ।
धैर्यं गमिष्यति [2]निरुद्धशरीरभीरु-
चित्तस्थभीति-परिणामवशादिवोच्चैः ॥३४॥

2797 कोदण्ड-मन्दरगिरि-श्रवणान्तकृष्ट-
मौर्वीकृताहिघटितोन्नतपृष्ठभागः ।
यस्याच्युतोऽप्यभिददुष्णमरीचिबिम्ब-
दुर्दर्शभासुरमुखस्त्रिपुरं पृषत्कः ॥३५॥

---

१. C भ्रमाभर for त्रपाभर । २. C विरुद्ध for निरुद्ध ।

2798 मुञ्चन्ति शात्रववधूनयनारविन्द-
मालाः कराहतपयोधरमण्डलाग्रम् ।
अद्यापि दीपितपुरत्रयतायमान-
धूमाभिघातघटनादिव यस्य बाष्पम् ॥३६॥

2799 आलम्बितं करजकूटशिखाविदष्ट-
तारागणं वपुषि वीक्ष्य मृगेन्द्रकृत्तिम् ।
यस्योज्झितः शुचिमरीचिचयश्चकास्ति
भीत्येव लक्ष्महरिणेन किरीटचन्द्रः ॥३७॥

2800 ऊर्ध्वेक्षणानलमनिन्धनमप्यवैमि
धत्ते मया युधि हरः स विजीयमानः ।
रोषानुबन्धमलिनालिकपट्टपृष्ठ-
निष्ठ्यूतधूमशबलीकृतविस्फुलिङ्गम् ॥३८॥　　चक्कलकम्

2801 आकूणितेक्षणमुखस्य कृपाणयष्टि-
रेषा [1]रणेषु पतितोरसि चन्द्रमौलेः ।
हारीकृतोरगफणामणिशाणकोण-
काषक्रमेण मसृणीभवति क्षणान्नः ॥३९॥

2802 पश्यस्यवश्यमचिरेण विखण्ड्यमान-
दोर्दण्डदर्परभसस्य मया रणेषु ।
[2]श्यामायमानमलिकेक्षणवह्निधूम-
च्छायाविलङ्घितमिवाननमिन्दुमौलेः ॥४०॥

2803 आपातजर्जरितजह्नुसुताजलौघ-
निर्मृष्टलाञ्छनकलङ्क इवाच्छलेखः ।
हस्ते यशोऽङ्कुर इवैति पुरा हरस्य
हेला जयेन मम सोऽपि किरीटचन्द्रः ॥४१॥

---

१. A रणे निपतिता ।　　२. C श्यामायमानमधिकेक्षण ।

2804 आयोधनेऽपि विजितस्य मया स्मरारे-
रूर्ध्वेक्षणानलशिखाभिहतो ललाटे ।
पाणिः पुरेति [1]घटनां नखकोटिरश्मि-
सन्देहितामलकिरीटशशाङ्कखण्डः[2] ॥४२॥

2805 पीनान्तरालपरिवर्तितमत्कृपाण-
च्छायानुबन्धबहलच्छविकालकूटम् ।
कण्ठं बिभर्ति न चिरादिव संभ्रमार्त-
शैलाधिराजतनयेक्षितमिन्दुमौलिः ॥४३॥

2806 चक्रीकृतातनुधनुर्गुणगुञ्जितेन
सङ्ग्राममूर्ध्नि मयि रुन्धति शैलकुञ्जान् ।
जिह्रे तु तस्य हृदयं तनुलग्नभीरु-
चित्तार्धभागविदितच्युतधैर्यबन्धम् ॥४४॥

2807 निर्धौतकज्जललवामपि बद्धघोर-
मूर्च्छान्धकारगहनां रुदितेन गौरी ।
न्यस्ताञ्जनामिव विधास्यति पक्ष्मपङ्क्ति-
रुद्वृत्ततारकमयूखशिखावलीभिः ॥४५॥

2808 चिन्तागृहीतदयिताशिथिलोपगूढ-
कण्ठस्य मन्युभरदुःस्थितचित्तवृत्तेः ।
शय्यान्तरे सरिदिवैष्यति भङ्गमाशु
सा वर्तिनी रसिकतानुगता स्मरारेः ॥४६॥

2809 तारं शरासनगुणक्वणितं भयेन
संस्तम्भितश्रवणतालमुदञ्चिताक्षाः ।
आकर्णयन्तु समरे मम जन्मसाम-
घोषोदयातिरभसादिव दिग्गजेन्द्राः ॥४७॥

---

१. C घटनां च कठोररश्मि । २. B जडांशुखण्डः ।

2810 ग्रासीकृताखिलजगत्त्रितयोऽधुनैव[1]
सान्द्रान्धकार[2]मलिनामसुराधिनाथाः ।
किं धूमवर्तिमिव तामपि कालरात्रि-
मेकः पिबामि भवतामधुना पुरस्तात् ॥४८॥

2811 निघ्नन्नखेटखटकामुखहस्तकृष्ट-
मौर्वीविनिर्गलविनिर्गतमार्गणौघैः ।
तां रेवतीमपि खटाखुमवैमि संख्य-
मार्गेऽतिशुष्कमलिनच्छविदेहयष्टिम् ॥४९॥

2812 आरोप्य किं पुनरपि भ्रममुष्णरश्मि-
बिम्बं क्रमेण हरिहेतिजिगीषयैकः ।
टङ्काभिघातविनिकुट्टिततन्निशात-
तेजश्छटाभिरपरं घटयामि चक्रम् ॥५०॥

2813 माणिक्यकन्दुकमिवोष्णमरीचिबिम्ब-
मास्फोट्य पाणिकमलेन सलीलमेतत् ।
कुर्वे तदीयशिखिगर्भमयूखताम्र-
मारूढपाकमिव किं क्षितिपीठपृष्ठम् ॥५१॥

2814 अभ्याहता निपतता करवालमेघ-
धाराजलेन गुरुसङ्गरदुर्दिनेषु ।
मुञ्चन्तु तावदधुना चिरसंभृतं त-
मूष्माणमुन्नतिजुषः प्रतिपक्षशैलाः ॥५२॥

2815 मुक्ताशिलाशकलकोमलभाखि बाल-
भारेऽस्तु दुःखविधुरा चमरीव तावत् ।
उच्छ्रायि दैत्यपति-कीचकचक्रवाल-
भग्नेऽधुना यशसि निर्जरवंशलक्ष्मीः ॥५३॥

---

१. C पुरैव ।  २. C मलिनाम् ।

2816 गाम्भीर्यरेचितमनूर्जितकैटभारि-
तापानुबन्धविसरत्त्वमभीक्ष्णमाप्तम् ।
तत्स्तोकमेव सुरसैन्यमवैमि ताव-
दायोधनेऽत्र मरुमार्गजलायमानम् ॥५४॥

2817 [1]मन्ये निसर्गमहतां हृदयेषु पूर्व-
मिच्छैव निष्प्रतिघतामनघां वहन्ती ।
पश्चादुपायघटना सकलेषु कृत्य-
वस्तुष्वनन्यसदृशीमुपयाति सिद्धिम् ॥५५॥

2818 विस्पष्टमुष्टिघटनागुणयोगभाज-
स्तीक्ष्णीकृता भटजनेन कृपाणपट्टाः ।
कार्यप्रबन्धघटनावहितैः सुनीति-
मार्गाश्च भीरुहृदयैर्ननु सप्रपञ्चाः ॥५६॥

2819 यस्मिन्निसर्गमहतां चरमः प्रकृष्ट-
मारम्भमाद्यमतिशेत इह प्रयत्नः ।
तं तारतम्यभरसंभृतिजृम्भमाण-
संरम्भशून्यफलमाद्रियतेऽविदग्धः ॥५७॥

2820 और्जित्यमुज्झितवतां बत वीतशङ्कं
कार्यं करिष्यति च नीतिविषूचिका वः ।
वन्ध्यासुतः शशविषाणधनुर्विधाय
मोक्ष्यत्यवश्यमचिरेण स नाकबाणान् ॥५८॥

2821 विस्पष्टलुण्ठनकथां विजहीत नीति-
कन्थाममन्थरपराक्रममार्गपन्थाः ।
तन्द्रालुभिर्न सुलभा ननु धैर्यशौर्य-
शौटीर्यहार्यहृदया क्वचिदेव लक्ष्मीः ॥५९॥

---

१. सत्ये for मन्ये ।

2822　नूनं मलीमसपयोधरमण्डलासु
जातासु दिक्ष्विव विपक्षनितम्बिनीषु ।
सम्प्राप्यते मधुजितेव विटङ्करत्न-
पर्यङ्कशेषघटितेन मयापि निद्रा ॥६०॥

2823　कृपणविरुतिलग्ना रात्रिशोभाधरेऽस्मि-
न्नभिपतति तमिस्रा धूसरे मत्कृपाये ।
विरहविधुरचेताः पार्श्वमुत्स्रक्ष्यति द्रा-
क्तुहिनशिखरिकन्या चक्रवाकीव भर्तुः ॥६१॥

2824　इत्याविर्भूतदर्पप्रसरमभिदधत्यन्धके बद्धमन्या-
वालक्ष्यान्तर्विवक्षास्फुरदधरपुटश्चुक्षुभे काञ्चनाक्षः ।
रत्नप्रालम्बमालामलकिरणशिखानिर्झराम्भश्छटाभि-
र्भिन्नन्निर्वाप्यमाणातनुकुलिशशिखिप्लोषमुच्चैरिवोरः ॥६२॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये अन्धकासुरव्याहारो नाम पञ्चत्रिंशः सर्गः ।

---

षट्त्रिंशः सर्गः

2825 बिभ्रत्कलिन्दतनयामिव चन्द्रमौलि-
लीलाधृतत्रिदशनिर्झरिणीर्ष्ययारात् ।
श्यामीकृतार्ककरचक्रकिरीटकूट-
कोटिस्फुरन्मरकतांशुशिखेन मूर्ध्ना ॥१॥

2826 दोलायमान-मणिकुण्डलकोटि-लग्न-
रत्नांशुपुञ्ज-परिपिञ्जरितावतंसः ।
अंसस्थलेन विकटांसतटेऽभिहत्य
व्यंसासुरं स निकटस्थितमित्यादीत् ॥२॥

युगलकम्

2827 हे दैत्यनाथ ! किमवस्तुविजृम्भमाण-
संरम्भमित्यभिदधासि विभिन्नधैर्यः ।
तिष्ठत्सु दानवभटेष्वपि संयुगाज्ञा-
लाभोन्मुखेषु दलितारिकुलाचलेषु ॥३॥

2828 सत्स्वेव संनिहितदिग्गजगण्डभित्ति-
विष्पन्दमान-मदपङ्ककृताङ्कुरेषु ।
दैत्येन्द्रबाहुषु रिपुक्षयकालरात्रि-
मालम्बते तव करः करवालवल्लीम् ॥४॥

2829 [1]पार्श्वे विलोकयसि किं भ्रुकुटिं विधाय
कोपात्सवेपथुकरः कुलिशं जिघृक्षुः ।
तत्कार्यमेष कुरुते तव बाहुरेव
हेलाविरुग्ण-सकलाहितशैलचक्रः ॥५॥

---

१. A पार्श्वं ।

2830 आयोधयत्यधिकमेकतमापि काचि-
दल्पापि ते भटवरूथवती विपक्षम्।
पर्याप्तिमेति शिखिनः समिदुद्धतस्य
दग्धुं स्फुलिङ्गकणिकापि समासजन्ती ॥६॥

2831 मेघासितस्तव भुजो ननु मेकलाद्रिः
केयूरमेष शिखरं विकटं बिभर्ति।
निस्त्रिंशयष्टिरयमत्र विटङ्कसीम्नि
हालाहलोल्बणलता विदधाति मोहम् ॥७॥

2832 सत्यं त्वमेव सकलं सुरराजचक्र-
मेकः क्षणाद्दलयितुं समरे समर्थः।
भस्मीकरोतु वडबानलमन्तरेण
कल्लोलकाण्डकलिलं क इवाम्बु सिन्धोः ॥८॥

2833 तेजस्त्वया निशितमार्गणटङ्कघातै-
स्त्वष्ट्रेव शातितमनर्गलमिद्धधाम्नः।
आरोपितस्य समरभ्रममाततायि-
लोकस्य दीप्ततरमारचितं च चक्रम् ॥९॥

2834 आकर्णितेन वचसा भवतो बिभर्मि
यत्सत्यमुत्पुलकपूरभरां स्वमूर्तिम्।
कोऽप्येष शब्दमहिमा जलदस्य येन
रत्नाङ्कुरप्रसवमेति विदूरभूमिः ॥१०॥

2835 वाक्यं ब्रवीतु सुवचाः सदसद्विवेक-
योग्यो भवानिव भवेद्यदि तत्र कश्चित्।
ग्राव्णः प्रसूतिमधिगच्छति हेम यस्मा-
न्नासौ क्वचिद्भवति तस्य निकाषपट्टः ॥११॥

2836 प्रज्ञा ममाल्पविभवापि विवेकयोग-
मेषा कियन्तमपि नैव निरस्यतीह ।
ज्योत्स्नातपं बहलपक्षपरिक्षतापि
नात्मानुरूपममृतांशुकला जहाति ॥१२॥

2837 नैसर्गिकीं विसरतां दधतोऽप्यभीक्ष्ण-
मासेदुषोऽपि जडिमानमगण्यवृत्तेः ।
वाक्यस्य सारगुरुणो गुरुभिः परीक्षण-
मन्तः प्रसूतिरुपलादिव काञ्चनस्य ॥१३॥

2838 अर्हन्ति मेघमलिनाः सदसि ग्रहीतु-
मेतेऽर्थतत्त्वमधुना वचसि स्थितं नः ।
दैत्याधिपा मधुकरा इव पुष्पधूलि-
गर्भे कृतव्यतिकरं मकरन्दलेशम् ॥१४॥

2839 निर्भिद्यमानहृदयोच्छलितं व्युदस्त-
हस्तस्य पञ्चभिरुपोढनृसिंहमूर्तेः ।
रोषादिव प्रतिमितैर्नखदर्पणेषु
दैत्येन्द्रशोणितमपीयत यस्य वक्त्रैः ॥१५॥

2840 दंष्ट्राग्रहीत गुरुसंभ्रमभूतधात्री-
पातालपातपुनरुक्तिभयेन रुद्धम् ।
अन्तर्विघूर्णनविसंस्थुलसप्तलोक-
मासीद्वराहवपुषः श्वसितं च यस्य ॥१६॥

2841 मच्चक्रकोटिपरिवर्तनसंधिबन्ध
च्छेदार्तिमेष कथयिष्यति दानवानाम् ।
जीवन्विधुन्तुद इतीव पुरा विचिन्त्य
येन व्यधायि मुखमण्डलमात्रशेषः ॥१७॥

2842　सङ्ग्राममूर्धनि विपूरयितुं न येन
　　यत्नादपि स्फुटमपार्यत पाञ्चजन्यः ।
निःश्वासनुन्नहृदयास्पद-सप्तलोक-
　　संस्थानरुद्ध-विकटाननरन्ध्रमार्गः ॥१८॥

2843　लक्ष्मीकराकलित-विभ्रमपुण्डरीक-
　　लीलावमृष्टचरणो युधि शार्ङ्गपाणिः ।
चिन्तापथं न कथमेति स दैत्यमार्ग-
　　संहारतिग्मकरबिम्बसुदर्शनो वः ॥१९॥　पञ्चभिः कुलकम्

2844　निष्ठ्यूतनिष्ठुर-शिखानलविस्फुलिङ्ग-
　　पिङ्गीकृताम्बरतला समराङ्गणे वः ।
कौमोदकी स्मृतिपथात् स्खलिता कथं नु
　　तद्बाहुदण्डघटितारियुगक्षयोल्का ॥२०॥

2845　सह्येत केन रणवर्त्मनि नन्दकोऽपि
　　कण्ठच्छिदारसभरादिव योऽसुराणाम् ।
कल्माषितोष्णकिरणांशुकरालरश्मि-
　　रेखाच्छलेन कुरुतेऽन्यकृपाणसर्गम् ॥२१॥

2846　यस्याहवेषु परिवर्तजुषो मुरारि-
　　हस्ताङ्गुलीकिसलयाग्रगतस्य दूरम् ।
सीमन्त्यमानतिमिराः किरणैर्निशात-
　　धारावखण्डनभियेव [1]दिशोऽपसन्नः ॥२२॥

2847　दिग्देवताकनकदर्पणविस्फुलिङ्गः
　　सर्पन्नतर्प्यत जनार्दनदर्पवर्ष्म ।
धाराकृशानुरपि यस्य सुरारिकण्ठ-
　　नाडीनिरर्गलगलत्क्षतजच्छटाभिः ॥२३॥

---

१. C दिशः प्रसन्नैः ।

2848 चक्रं [1]क्षमेत युधि [2]तत्क इवास्य रोद्धु-
मुद्धूत-धूसरित-[3]दिक्पटलान्धकारम् ।
उन्निद्रकुन्ददलकोमलकीर्तिचन्द्र-
लेखोपबृंहणसहस्रमरीचिबिम्बम् ॥२४॥ तिलकम्

2849 मा भूत्पतत्रपवनेन कपालबन्ध-
संधिर्द्विधा दलित एष दिवस्पृथिव्योः ।
ध्यात्वेति योऽण्डशकलादुदितः क्षणेन
चण्डेतरोड्डयनडम्बरिकोऽम्बरेऽभूत् ॥२५॥

2850 [4]हेलादिलङ्घितजगत्त्रितयो भुजङ्ग-
सन्दानितः शतमखानुजदेहभारः ।
येनोह्यते वियति वाजिगणेन दूर-
मुष्णत्विषो रथ इव स्फुरदेकचक्रः ॥२६॥

2851 पुञ्जीकृतोरगसहस्रजिघत्सयेव
पक्षानिलेन घनवर्त्मनि यश्चकार ।
क्ष्मामण्डलं विदलिताचलचक्रवाल-
मेकीभवत्क्षुभितसप्तमहासमुद्रम् ॥२७॥

2852 ब्रह्माण्डगर्भमपि योऽधिवसन्निजाण्ड-
पिण्डादनिर्गमनमेव विदाञ्चकार ।
दिग्भित्तिसङ्कट-[5]विकूणितपक्ष्मपाली-
[6]मन्दक्रमोड्डयन दुःस्थितचित्तवृत्तिः ॥२८॥

---

१. C क्रमेत for क्षमेत । २. C तर्क for तत्क ।
३. C तत्पटलान्धकारम् for दिक्पटलान्धकारम् । ४. C हेलाविलोडित ।
५. C विकूजित for विकूणित । ६. C सर्पक्रमोड्डयन for मन्दक्रमोड्डयन ।

2853 यस्यावतीर्णमधिवारिधि [1]शैशवेऽपि
लीलागृहीतगजकच्छपमञ्जसारात् ।
त्रस्तालगर्द-गृहिणीतरलाक्षिदृष्ट-
मुत्कम्पिकातरजनार्दनकूर्ममासीत् ॥२९॥

2854 तार्क्ष्यः स चिन्त्य उदकादिव दुग्धसिन्धो-
रादत्त योऽमृतरसं सुरगुप्तिबन्धात् ।
चञ्च्वग्रदष्ट-पृथुशेषमृणालकाण्ड-
पातालगर्भनलिनीतटराजहंसः ॥३०॥ षड्भिः कुलकम्

2855 आताम्रदन्तुरफणाङ्गुलिकोटिभाग-
विस्पष्टरत्नकरजांशुमुचा कथञ्चित् ।
उत्तम्भिता विकटभोगभुजेन यस्य
पातालतालु तरसावनिराविशन्ती ॥३१॥

2856 क्ष्मामण्डलोद्धरणलग्नमहावराह-
विन्यस्त-निष्ठुर-खुराग्र-विखण्ड्यमानः ।
पिङ्गैः परागपटलैर्नवचीनपिष्ट-
पिष्टातकश्रियमधुर्मणयोऽपि यस्य ॥३२॥

2857 कल्पावधावधिपयोधि यमेकमेव
बद्धास्पदं मधुरिपुः शयनीचकार ।
कुक्षिप्रविष्ट-भुवनत्रयचित्रचेष्टा-
व्याहारविभ्रमविलुप्तसमाधिनिद्रः ॥३३॥

2858 शेषः स यस्य भुवनप्रलयावतार-
पर्याप्ततांण्डवपरिक्रमनस्यमानाम्[2] ।
दिक्कुञ्जरांसशिखरस्खलितां कथञ्चि-
दुर्वीं दधच्छ्वसिति गाढमुपोढखेदः ॥३४॥

---

१. C शैशवोऽपि for शैशवेऽपि ।	२. C कम्पमानाम् ।

2859 भ्रूभङ्गभीषणमरीणरुषो रणेषु
तस्य क्षमेत क इवेक्षितुमिन्दुमौलेः ।
शाखाभिराहितभयं तिसृभिस्त्रिशूलं
दृग्भिश्च वक्त्रमनलोल्बणरूपभाग्भिः ॥३५॥ पञ्चभिः कुलकम्

2860 यस्याः पलायनपरायणतामुपेत-
मालोक्य दानवकुलं समरे हसन्त्याः ।
भाति स्म दन्तमणिषून्मिषिता हिमाद्रि-
सानुस्थलात्परिणतेव विपाण्डुरश्रीः ॥३६॥

2861 आकम्पितत्रिभुवनां भुजदण्डखण्ड-
संच्छादिताम्बरतलां [1]समराजिरेषु ।
कस्तां जगत्क्षयनिरर्गलनृत्तराग-
लीलामिव स्मररिपोर्विषहेत चण्डीम् ॥३७॥ युगलकम्

2862 यस्या[2]धिगण्डतटमुत्कटकर्णताल-
दोलानिलाभिहति-निर्दयरुग्णमूलाः ।
क्षोणीभृतोऽपि पतिताः स्म तदानलोभ-
लीनद्विरेफ[3]पटलश्रियमुद्वहन्ति ॥३८॥

2863 अभ्युन्नतांसशिखराग्र-[4]विघट्टनाभि-
र्नोन्मूलितः कथमपि त्रिदशाचलोऽपि ।
गण्डस्थलीं निकषतः स्म तदानसिन्धु-
मालानपादप इव श्रियमेति यस्य ॥३९॥

2864 यस्यैक्षतेन्दुकलिकाधवलाद्विषाण-
दण्डादुरःस्थलविवर्तितहारफेना ।
ज्योत्स्नाच्छटा[5]शबलिताम्बरवर्त्मभित्ति-
र्मन्दाकिनी हिमगिरेरिव निष्पतन्ती ॥४०॥

---

१. C समराजिरेषु for समराजिरेण । २. C यस्याधिगण्डतल ।
३. C लीनद्विरेफनिचय । ४. C omits beyond विघट्टनाभिः till the end of the श्लोक । ५. C omits शबलिताम्बरवर्त्म ।

2865 यस्यामलाम्बरसरस्यहिमांशुबिम्ब-
रक्ताम्बुजं सरलदीधितिपक्ष्म लक्ष्मीम् ।
धत्ते विषाणविसकाण्डकरालमूल-
लीलाव्युदस्तकरदण्डमुहूर्तलग्नम् ॥४१॥

2866 गाङ्गायनेः समिति तस्य विषाणवज्र-
पातेन दानवकुलाचलचक्रवालम् ।
संशीर्यमाणविकटास्थिशिलावकीर्ण-
मस्याः क्षणेन लघयिष्यति भारमुर्व्याः ॥४२॥ पञ्चभिः कुलकम्

2867 [1]उत्क्षिप्तपीवरनिरायतकंधरेण
मेघावलीमिव चुचुम्बिषतानुरागात् ।
यः स्मोह्यते सरभसं [2]सविलासपिच्छ-
सञ्छादिताम्बरतलेन शिखण्डिनोच्चैः ॥४३॥

2868 तिग्मांशुबिम्बमणिकन्दुकमव्यवस्थ-
मास्फोट्य पाणिकमलेन सलीलमुर्व्याम् ।
चिक्रीड यः शिशुतया प्रलयागमेषु
सप्रेम पश्यति विमुग्धमृगाङ्कमौलौ ॥४४॥

2869 स्कन्दस्य तस्य दितिजाधिपदुग्धसिन्धु-
लक्ष्मीसमुद्धरणमन्दरशैलमूर्तिम् ।
क्रौञ्चाद्रिनिर्दयविमर्दशिताग्रिकोटिं
शक्तिं [3]न सोढुमसुरेष्विह कोपि शक्तः ॥४५॥ तिलकम्

2870 प्रेङ्खच्छिखण्डभरशोभिवपुः कलिन्द-
कन्याह्रदश्रियमगाधतया दधाने ।
शक्तो रणे दलयितुं प्रचलाकिकेतु-
रह्नाय कालियमिवाहितमच्युतश्रीः ॥४६॥

---

१. तत्क्षिप्तपीवर for उत्क्षिप्तपीवर ।

२. C सविकारपिच्छ for सविकासपिच्छ ।    ३. C च for न ।

2871 आस्थानदानसमये शशिखण्डमौले-
रातस्थुषः प्रतिदिनं प्रतिहारभूमिम् ।
यस्यावलोकनवशाद्वहु मन्वते च
पद्मासनप्रभृतयोऽपि [1]दृशः पतन्तीः ॥४७॥

2872 को वा विडम्बितजगत्प्रलयार्कबिम्ब-
वह्निस्फुलिङ्गनिकुरम्बनिपीतसिन्धुम् ।
शूलं शिलादतनयस्य युधि क्षमेत
सोढुं ससंयुगरसभ्रमणानुबन्धम् ॥४८॥ युगलकम्

2873 आक्षेपमाहवमुखे विधुतोत्तमाङ्ग-
संघट्टनिर्दलितमौलिकपालखण्डम् ।
[2]चण्डेश्वरस्य निबिडभ्रुकुटि-प्रचण्ड-
टाङ्कारडम्बरमपि क्षमते न मृत्युः ॥४९॥

2874 क्रोधेश्वरोऽपि करवालविलूनकण्ठ-
पीठै रणेष्वसुहृदां लुठितैः शिरोभिः ।
तृप्तिं कृतान्तकरिणो विदधद्विधान-
पिण्डैरिवाजिभुवि वीक्षितुमप्यशक्यः ॥५०॥

2875 इन्द्रोऽपि सान्द्ररुचिचन्द्रकचक्रवाल-
रूपाभिरामपरिणामविलोचनश्रीः ।
भीत्या शिखी शतमखस्य बभूव यस्य
चिन्त्यः कथं नु भवतां न स वीरभद्रः ॥५१॥

2876 अन्येऽपि लोकपरिवर्तनदुर्विलास-
हेलोल्लसत्प्रलयवासरविभ्रमा ये ।
तेभ्यो ममास्ति न भयं न च तेषु नीति-
गर्भं वचोऽभिदधतो ननु पक्षपातः ॥५२॥

---

१. A, B दिशः ।		२. A चण्डीश्वरस्य ।

2877　प्रज्ञाविकल्पगिरिलोडितकार्यसिन्धु-
सारामृतासवपरिग्रह एव तस्मात् ।
उत्सृष्टविग्रहकथाः कुरुत प्रयत्न-
मभ्येषथासुरभटा ननु तेन मृत्युम् ॥५३॥

2878　स्वल्पापचार-विधुरोऽवसरेषु कश्चि-
त्प्राप्नोत्यनर्थपरिणाममवश्यमेव ।
विस्फोटवान् किल कुशाङ्कुरकण्टकादि-
विद्धो भवत्यविरतं कुलिकोदयेषु ॥५४॥

2879　तेजो विकासि दधतः स्थिरसंप्रहार-
कण्डूनिरर्गलमरातिबलं जिगीषोः ।
नीतिप्रपञ्चरहितस्थिति पौरुषं हि
नाभाति पङ्कजमिवोद्धृतबीजकोषम् ॥५५॥

2880　आयोधनेष्वतनुदुर्धरशौर्यशालि-
गीर्वाणचक्रमवमंसथ मा स्म दैत्याः ।
येनाहुरग्रहणमार्यधियः परेषो
जाड्यं न धैर्यमिह शौर्यनिरर्गलेषु ॥५६॥

2881　प्रज्ञाप्रकर्षविनियोगविशेषसाध्य-
मिच्छन्ति कार्यगहनं नहि मोहहेयम् ।
आदीप्त-दीपकशिखानिकुरम्बभेद्य-
रूपं तमोऽन्धतमसेन कदा विभिन्नम् ॥५७॥

2882　केचित्पराक्रमगुणेन नयेन केचि-
त्केचित्तथा तदुभयेन विशेषनिष्ठाः ।
अन्ये पुनः सकलतन्निरपेक्षवृत्ति-
दैवानुभाववशतः श्रियमाप्नुवन्ति ॥५८॥

2883 अन्यार्थमन्यफलमेव भवत्यवश्य-
मारम्भजातमखिलं मतिदुर्विधानाम् ।
कण्डूयनाय करिणं शरभो हि पृष्ठ-
मारोपयत्यनिशमेति स तेन नाशम् ॥५९॥

2884 हे दैत्यनाथ ! विनयस्व परेषु मन्यु-
मन्यायवृत्तिरभसारभटीयमास्ताम् ।
संमान्यतां सदसि दूतमुखेन ताव-
देतन्मृगाङ्कशकलाभरणस्य वाक्यम् ॥६०॥

2885 इति दितिसुतसिन्धुर्वाक्यरत्नं विसृज्य
व्यरमदतनुमुक्ताकर्णपूरत्विषोच्चैः ।
स्फुटनयगुणतोषाच्चुम्ब्यमानं कपोल-
स्थलममलधियेवागाधधैर्यो दधानः ॥६१॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये कनकाक्षनयोपक्षेपो नाम षट्त्रिंशः सर्गः ।

---

## सप्तत्रिंशः सर्गः

2886 इत्थं वचः सुररिपावभिधाय तत्र
तूष्णीं स्थिते विदधदुन्मुखमट्टहासम्।
संरम्भगर्भमिति संसदि वज्रबाहु-
रुज्जृम्भिताजिरसमारभताथ वक्तुम् ॥१॥

2887 यत्काञ्चनाक्ष ! भवता नयगर्भमुक्त-
मित्थं वचस्तदुशना यदि वक्तुमीष्टे।
श्रुत्वैतदप्यसुवचं गुरुणापि माद्द-
गन्यो निसर्गजडधीः किमिवाभिदध्यात् ॥२॥

2888 आकारमात्रमवलम्ब्य विभीतकस्य
पुष्पं विडम्बयतु नाम मधूकशोभाम्।
विष्यन्दि-मञ्जु-मकरन्द-कणच्छटार्द्र-
किञ्जल्कतास्य [1]कुत एव पुनस्तदीया ॥३॥

2889 किञ्चित्तथाप्यसहनत्वमरातिलोक-
[2]स्तुत्याभिधापयति मां प्रतिकूलरूपम्।
व्याघातमत्र निजपक्षपरिग्रहस्य
पश्यन्ति ये तु दितिजास्त इहं प्रयान्तु ॥४॥

2890 वाक्यं ममैतदणुसारमपि ग्रहीतु-
मर्हाः स्थ यूयमविवेकविकल्पवन्ध्याः।
अल्पोऽपि किं मधुकरैर्मकरन्दरेणु-
रादीयते हि मधुनो न मधूकपुष्पात् ॥५॥

---

१. A, B पुनरेव कुतः। २. B पिधापयति।

2891 आबिभ्रतो विरसतामथवाभ्युदेति
मत्तो न गीः कृतधियां हृदयङ्गमा वः ।
क्षाराम्बुधेः कुत इवामृतशीकरार्द्र-
सान्द्रप्रभाधवल-चन्द्रकलाप्रसूतिः ॥६॥

2892 ये मन्दराद्रिमपि वासुकिभोगबन्ध-
लीलावघर्षण-कृशीकृत-मध्यभागम् ।
उत्पाट्य पाणिभिरनाहतलम्प्रहार-
हेला विरेजुरुपपादितशक्तिकृत्याः ॥७॥

2893 एतेऽपि जेतुमतनूत्पुलकांसकूट-
दोर्दण्डखण्डित-निरर्गलयुद्धशौण्डाः ।
हुङ्कारसम्भ्रमवलत्त्रिदशाधिराज-
बद्धाभयाञ्जलिपुटा युधि केन शक्याः ॥८॥　　युगलकम्

2894 सिंहीसुतस्य समरे सहसोत्थितस्य
शक्ताः कथञ्चन विलोलदृशः पुरस्तात् ।
स्थातुं निसर्गतरला बत वीतशङ्क-
माचक्ष्व दूत ! यदि वः प्रमथप्लवङ्गाः ॥९॥

2895 यस्याग्निचूर्णपरुषे सरुषो रणेषु
दीप्रप्रतापतपने तपति त्रिलोकीम् ।
निर्यत्तदूष्मभरखिन्नतयेव खड्ग-
धारागृहे चिरमुवास विपक्षलक्ष्मीः ॥१०॥

2896 यस्य प्रतापमिव सोढुमशक्नुवद्भि-
र्बन्दीकृतैः फणिपुरन्ध्रिगणैर्बुभूवे ।
वैक्लव्यदुर्बलतया शिथिलायमान-
विस्रस्त-कञ्चुकसितांशुक-चक्रवालैः ॥११॥

2897 यस्याहवेषु वधूधे भयसङ्कटेषु
निःश्वास-मारुत-परम्परया रिपूणाम् ।
भीष्मोष्म-शुष्म-परिपाक-विशेषदग्ध-
विद्वेषिवंशशततीव्रतरः प्रतापः ॥१२॥

2898 उच्चैरनायिषत यस्य समाकुलत्वं
विद्वेषिणामदयदारितदोर्द्रुमाणाम्[1] ।
आकृष्टकीर्तिकुसुमस्तबकैः कृपाण-
वल्लीनिपातपवनैः प्रसरद्भिराशाः ॥१३॥

2899 दुर्वार-वैरिसमराध्वर-यूपबाहो-
राधत्त यस्य रुचिरं चरणाश्रया श्रीः ।
पाणिं नतिप्रवण-दुर्जयलोकपाल-
निःश्वासधूसरित-विभ्रमपुण्डरीकम् ॥१४॥

2900 किं तस्य पाण्डुरयशस्तुहिनाचलाभि-
मुख्यं न संख्यसुरभौ दधत. सुबाहोः ।
भानोरिवाम्बुधितटानि गतो विलङ्घ्य
तीव्रीभवन्नधिकमेव दिशः प्रतापः ॥१५॥  षड्भिः कुलकम्

2901 संरम्भपाटलदृशः शरदभ्रशुभ्र-
हासस्य निःश्वसितघूर्णितमेधिकाभिः ।
भ्रेमेऽस्य गाढमिव दृग्भिरदभ्रबभ्रु-
भ्रूविभ्रमभृकुटिसंभृतसंभ्रमाभिः ॥१६॥

2902 उज्जृम्भमाणतिमिरा भृकुटिः सलील-
मस्यैव संभृतरुषो वदने स्फुरन्ती ।
तच्चित्रमत्र यदरातिवधूमुखानि
लम्बालकानि परिधूसरतामनैषीत् ॥१७॥

---

१. C दोर्द्रुमोऽल्पः for दोर्द्रुमाणाम् ।

2903 प्रालम्बयष्टिघटितारुणरत्नखण्ड-
प्रेङ्खन्मयूखनिकुरम्बपिशङ्गगर्भा ।
[1]अस्याततायिकुल-शोणित-पानगोष्ठी-
योग्यामिव स्म कुरुते करवालवल्ली ॥१८॥

2904 अस्यामलेन मम वा करवालमेघ-
धाराजलेन रणदुर्दिनडम्बरेषु ।
शान्तिं सुखेन नवचन्द्रकलाञ्छितश्रीः
किं नीयते दितिजनाथ ! न नीलकण्ठः ॥१९॥

2905 प्रत्युत्फलत्सुरगणैर्ददृशे ममापि
वक्षःस्थलात्समरमूर्ध्नि मुरारिचक्रम् ।
अभ्युज्जिहानमुदयाद्रि-नितम्बभित्ति-
भागादिव क्षतज-पाटलमर्कबिम्बम् ॥२०॥

2906 श्यामत्वमेति सहसैव ममाततायि-
लोकस्य कुन्दकलिकाधवलं यशः प्राक् ।
श्च्योतन्ति कज्जल-पराग-मलीमसानि
पश्चाद्विलोचनजलानि नितम्बिनीनाम् ॥२१॥

2907 [2]उद्भिन्न-पीन-पुलकाङ्कुरमन्य-शस्त्र-
धाराशतानधिगत-प्रणयामृतार्द्रम् ।
कण्ठग्रहं सपदि यस्य चकार चक्र-
धाराधिका तनुरुचिर्दयितेव राहोः ॥२२॥

2908 निष्ठ्यूत-निष्ठुरकृशानुशिखा-सहस्र-
धाराकरालममरेषु विलोकयत्सु ।
आक्षिप्य तत्करतलान्मणिकर्णपूर-
मिच्छामि कर्तुमधुना रभसेन चक्रम् ॥२३॥ युगलकम्

---

१. B, C यस्याततायि for अस्याततायि । २. C तद्भिन्न for उद्भिन्न ।

2909 संमोह-हेतुमधिगम्य पुरा कृपाण-
धारां रणेषु मदिरामिव सीरपाणिः ।
नूनं [1]पुरा पतति वः शिथिलाङ्गयष्टि-
राघूर्णमान-रुधिरारुण-लोचनश्रीः ॥२४॥

2910 चक्रायुधोऽस्तु समरे मुसलायुधो वा
शूलायुधो भवतु वा कुलिशायुधो वा ।
दोष्णैव तानहमनेन निहत्य हेति-
शून्येन धूसरमुखच्छवितां नयामि ॥२५॥

2911 सुव्यक्तमूर्जितधियो युधि हासयन्ति
वैदग्ध्यनिह्नुतधियो नयमार्गलग्नाः ।
दोलाधिरोहविधुरं विहितं च कार्य-
मुत्सन्नमेव च तदित्यपि मेऽभिसंधिः[2] ॥२६॥

2912 किं कीर्तितेन बहुना सुरनाथ ! ताव-
दापन्न-तामरस-सारस-हंस-हासम् ।
ग्रीष्मोष्मशोषित-सरःसदृशं करोमि
तच्चक्रिमिश्रितमहं तव शत्रुसैन्यम् ॥२७॥

2913 तार्क्ष्योऽपि संयुगमुखे निपतत्यवश्य-
मन्मुष्टिघातदलनाविधुतोत्तमाङ्गः ।
ग्रासीकृतोरग-सहस्रविषानुबन्ध-
मूर्च्छान्धकार-घटनादिव मीलिताक्षः ॥२८॥

2914 मन्दीकृतोष्णकरमण्डल-भासुरोर्ध्व-
ज्वालाजटालशिखिना त्रितयं पुराणाम् ।
यस्येषुणा सकलमूर्ध्वगतेन दूर-
मक्ष्णा च मन्मथवपुः प्रसभं दिदीपे ॥२९॥

---

१. B पतिष्यति (footnotes) ।　　२. B निश्चयः (footnotes) ।

2915 तस्याहवे विनिहतेषु मयानुगेषु
ज्योत्स्नावती कृतविशृङ्खलदुःखदाहा।
आस्तां जराधवल-केशशिखेव केतु-
दण्डावचूलसित-चामरचक्रवाला ॥३०॥ युगलकम्

2916 चूडाशशाङ्क इव निर्मलभासि भिन्न-
दिक्चक्रवालतिमिरे यशसि त्वदीये।
स्पष्टातिरेकमुपरि स्फुरति स्मरारे-
श्छायैति नूनमसुराधिप-वामनत्वम् ॥३१॥

2917 आकम्पितत्रिभुवना सरुषो ललाट-
पट्टं प्रसीद नुदतु भ्रुकुटिस्तवेयम्।
बद्धान्धकारगहना रणदुर्धरस्य
सेना च संप्रति विकम्पमरातिचक्रम् ॥३२॥

2918 आयोधने मुखरितामरशैल-कुञ्ज-
गुञ्जद्गुणाततनुधनुर्दनुसूनुगर्भे।
धैर्यं बिभर्त्यसकलेन कियन्निरुद्ध-
देहो हिमाद्रिसुतया हृदयेन शंभुः ॥३३॥

2919 आपाण्डुपिण्डित-यशोधनसारचूर्ण-
पूर्णारिपूगफल-भङ्गकृताभियोगः।
आकृष्य तस्य वपुषः प्रसभं भनज्मि-
ताम्बूलरागरभसादिव नागवल्लीः ॥३४॥

2920 कल्माषितामलजलां ज्वलतो ललाट-
नेत्रानलस्य चिरसंभृत-धूमलेखाम्।
शीतांशुमण्डल-विनिष्पतितां हरस्य
तल्लाञ्छनच्छविमिवानुगतां वहन्ती ॥३५॥

2921 मन्दाकिनी व्रजतु मूर्ध्नि जटानिकुञ्ज-
झाङ्कार-ताररव-डम्बरिताम्बरश्रीः ।
कल्पावसान-रभसोत्थित-भास्करांशु
तीव्राग्निशल्यशरपातवशेन शोषम् ॥३६॥　　युगलकम्

2922 चण्ड्याः करिष्यति रणे महिषध्वजोऽपि
लब्धावकाशमधुना किमपि स्फुरन्त्याः ।
पादाभिघात-दलिताहवशौण्डदर्प-
कण्डूलकासरवधानुशयादिवासौ ॥३७॥

2923 उत्खातदन्तमुसलां शरभिन्नकुम्भ-
विष्यण्णगाढरुधिरोक्षितकर्णतालाम् ।
हेरम्बमूर्तिमपविद्धविसां विवृत्त-
पत्त्रां करोमि नलिनीमिव वारणेन्द्रः ॥३८॥

2924 उत्तुङ्गबाहुशिखरस्थगितान्तरिक्ष-
मुद्दामनागकटक-स्थितिमप्रकम्प्यम् ।
क्रौञ्चाचलेन्द्रमिव मामविरुग्णपक्ष-
मासाद्य मुञ्चति पुरा न गुहो न शक्तिम् ॥३९॥

2925 कोदण्डदण्डमधुना कलधौतशैल-
माधाय शेषभुजगाधिप-भीषणज्यम् ।
हेलाविनिर्जितहरः प्रसभं शरेण
सप्तापि दूरमधुनैव भिनद्मि लोकान् ॥४०॥

2926 चण्डेश्वरस्य विदधे सहसोत्तमाङ्ग-
माबद्ध-विस्मय-सुरासुरचक्रदृष्टः ।
शार्ङ्गायुधो जगदिवाक्रमणोत्थपाद-
लीलाभिघातदलितोरुकपालवन्धम् ॥४१॥

2927 सङ्ग्राम-वासर-परिस्फुरितोऽतिशोभि
निर्धूतपावकशिखाकपिशत्विषोऽहम् ।
छायां शिलादतनयस्य विवर्तयामि
मेरोर्दिवाकर इवाप्रतिमप्रतापः ॥४२॥

2928 क्रोधेश्वरः क्व मम यास्यति हुङ्कृताग्नि-
धूमच्छटावलयितं दधदात्मकण्ठम् ।
पर्याप्तकालकवलीकरणप्रगल्भ-
तत्पाशरुद्ध-परिणाहमिवाहवाग्रात् ॥४३॥

2929 स्थूलास्थिकुम्भशिखरः करवालदान-
लेखाङ्कितः प्रविलसत्करपुष्करश्रीः ।
शक्तः क्षणान्मम भुजः प्रतिनागराज-
लीलां दधद्दलयितुं युधि वीरभद्रम् ॥४४॥

2930 यैराहवे दितिसुतैः समवर्तिनोऽपि
भग्नः प्रतापविभवेन सहैव दण्डः ।
स्यात्सप्ततन्तुदलने बहुमानपात्र-
मेषां पुरः क इव शंसत वीरभद्रः ॥४५॥

2931 सङ्ग्रामसीम्नि मयि गर्जति तारनाद-
मुज्झत्यवश्यमभिमानमरातिलोकः ।
शब्दः स केसरिण एव भयङ्करेण
येन श्रुतेन [1]विमदीभवदीभयूथः ॥४६॥

2932 मन्ये तदेव [2]वचनं रिपुविप्रकार-
रोषेण रूषितधियः समरेषु यस्मिन् ।
उद्भिद्यतेऽतिविषमा समवर्तिराज-
धानीभटस्य भ्रुकुटिः प्रतिकारहेतोः ॥४७॥

१. C विपदी भवति for विमदीभवत । २. B वदनं for वचनम् ।

2933 दोःशालिनो रणभुवि स्फुरणानुबन्ध-
भाजः क्षणाद्दलयतः सुभटस्य शत्रून् ।
संपश्यता मृतमुखानि परं परेत-
नाथेन साम्यमहमक्षम एव कर्तुम् ॥४८॥

2934 सङ्ग्रामकाननमुदूढ-करालपीलु-
बन्धं चमूरचित-शोभमरातिसंस्था ।
नैवाधितिष्ठति चिरं सुभटस्य चाप-
टाङ्कारनादचकिता हरिणीव लक्ष्मीः ॥४९॥

2935 गीर्वाणदैत्यसमरेषु करैर्विमुक्त-
सीत्कारशीकरकरालकणैर्घटन्ताम् ।
कुम्भोदर-स्खलित-पुष्कर-रन्ध्रमार्ग-
निष्ठ्यूतमौक्तिकगणैरिव[1] मत्तनागाः ॥५०॥

2936 कुर्वन्त्वखेटखटकामुख-हस्तकृष्टि-
चक्रीकृतानि ककुभो युधि कार्मुकाणि ।
आस्फालित-क्षुभित-सागरवारिधीर-
मौर्वीरवश्रवणसंभृतसंभ्रमार्ताः ॥५१॥

2937 ग्रासीकरोतु दिवसाधिपमेष कर्ण-
पाशं दधत्कनककुण्डलमण्डलाङ्कम् ।
विच्छिन्न-कण्ठकटकानुशयात्सलील-
मुल्लम्बिताच्छहरिचक्रमिवाद्य राहुः ॥५२॥

2938 बाष्पाम्बुशीकरकणौघनिभेन चन्द्र-
बीजच्छटा इव पुरा विकिरत्यमन्दम् ।
ग्रासीकृते शशिनि नूनमनेन नेत्र-
मत्रेस्तदुद्भवनिमित्तमतीव शोकात् ॥५३॥

---

१. C कणैरिव for गणैरिव ।

2939 शोकानुबन्धकृतजागरगाढखेद-
मन्तश्चरेषु च मरुत्सु विघूर्णितेषु ।
योग्यान्वयेऽप्यसुरविप्रकृतः कृशत्वे
संप्रत्युपैतु परिपीवरतां समीरः ॥५४॥

2940 उत्तुङ्ग-मङ्गल-मतङ्गज-जङ्गमाद्रि-
निःसङ्ग-भङ्गुर-तुरङ्ग-तरङ्गयमाणम् ।
अङ्गारिताङ्गमसुरायुधविस्फुलिङ्ग-
मुत्सङ्गसङ्गि-गगनाङ्गनवीरयोधम् ॥५५॥

2941 सच्चापचक्र-चतुरच्युत-काञ्चनोत्थ-
नाराचरेचित-चमूचरचक्रवालम् ।
आश्चर्यचर्य-चतुराञ्चित-चारुचर्च-
चन्द्रावचूलमचिराद्रणमस्तु चण्डम् ॥५६॥ युगलकम्

2942 संस्फेटवर्त्मनि जराधवलत्विषोऽपि
लीलाप्रकीर्णकगणा इव धीरयोधाः ।
एतेऽधिरूढरभसास्तव दैत्यनाथ !
शक्ताः प्रभञ्जनमपीरयितुं पुरस्तात् ॥५७॥

2943 तिग्मप्रतापघटनाभिमुखेष्वभीक्ष्ण-
मुद्दण्डपत्रपटलेष्वसुराधिपेषु ।
ज्योत्स्नेव पङ्कजवनेषु निशाकरस्य
कीर्तिः स्खलत्यकलुषापि मृगाङ्कमौलेः ॥५८॥

2944 विष्यन्दि-दानजल-कुञ्जरकुम्भ-भेद-
निर्मुक्त-मौक्तिककण-श्रमवारिबिन्दुः ।
क्रुध्यत्कृतान्त-कुटिलभ्रुकुटीविभङ्ग-
भीमा ममास्तु समरे करवालिकेयम् ॥५९॥

2945　व्यूहप्रपञ्चरचनां विदधातु शुक्रः
शक्तिस्तु नाथ ! भवतो युधि दुर्निवारा ।
संस्थानमस्तु रुचिरत्वविधायि शेष-
मालोकयत्यकलुषा हि कनीनिकाक्ष्णः ॥६०॥

2946　क्रोधात्क्षणेन ससुरासुरचक्रवाल-
मन्तं जगत्त्रयमपि व्यपनेतुमेतत् ।
उत्क्षिप्यतां रणमुखे कृतकालरात्रि-
संज्ञा करालकुटिला करवालिका भ्रूः ॥६१॥

2947　हेलाविलुप्त-नरसिंहकठोरकण्ठ-
पीठस्फुरत्पृथुसटाघटितांसकूटाः ।
शौर्योष्मनिष्क्वथित-हारलतेन्दुकान्त-
वारिच्छटाकण-करालितवक्षसोऽमी ॥६२॥

2948　संवादिदोहदरसाः सुरसंक्षयार्थ-
मुच्चैः स्फुरन्ति तव संसदि दैत्ययोधाः ।
तेजस्विनां तिमिरदारणनिश्चयेऽस्ति
किं नु क्वचित्त्रिभुवनेऽपि निसर्गभेदः ॥६३॥　युगलकम्

2949　लोकेऽत्र वीरजनतापरिभोग्य एव
केयं विभागपरिकल्पनलालसा वः ।
हेलावरुग्णहरिणा हरयो यथेच्छ-
मध्यावसन्ति ननु काननचक्रवालम् ॥६४॥

2950　येनातिपीडनरस-स्फुटनानुबन्धि-
बाष्पाम्बुशीकर-परिप्लुतपाटलाक्षः ।
कालोऽपि कण्ठवलितोल्बण-पाणिलग्न-
पाशः प्रसह्य चकृषे समरेषु तस्य ॥६५॥

2951 संख्यं सुरैरसुरराजकुलस्य कीदृ-
गेकीभवन्ति न हि केसरिणः कुरङ्गैः ।
दानान्धगन्धकरिकुम्भविभागभङ्ग-
दक्षस्फुरन्नखशिखाशिखराः कदाचित् ।।६६।। युगलकम्

2952 सिंहोऽस्तु शत्रुरथवाधिपतिर्मृगाणां
शंसास्पदं तदपि न द्वयमेव मन्ये ।
तस्य स्फुरत्करजवज्रशिखाभिघात-
हेलानिपातित-मतङ्गज-जङ्गमाद्रेः ।।६७।।

2953 इत्थं मौक्तिककर्णपूरकिरणव्याजेन गण्डस्थली-
चर्चाचन्दन-चर्चनामिव दधद्वीरोऽवलेपश्रियः ।
वाक्यं रत्नशिखाकरालितशिरः कम्पाभिरामं भटै-
रारब्धस्तुतिबन्धमन्धकसदस्युक्त्वा स तूष्णीमभूत् ।।६८।।

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये वज्रबाहुविस्फूर्जितं नाम सप्तत्रिंशः सर्गः ।

---

## अथाष्टत्रिंशः सर्गः

2954 [1]स्थितेऽथ तस्मिन्नथ जृम्भमाण-
संरंभमुद्गीर्य वचः सुरारौ ।
उवाच दूतः पुनरेव वाक्य-
मोजस्विताद्‌दुर्धरधैर्यबन्धः ॥१॥

2955 श्रुतिदीप-तिरस्कृतान्धकारा
प्रतिभासंपदमक्षतां वहन्ती ।
जयति व्यवहारहेतुरेका
मतिरेवार्थविनिर्णयं विधात्री ॥२॥

2956 विशिनष्ट्यनिशं शरीरभाजां
करणग्राममशेषमेव जिह्वा ।
कृतधीरयथोद्‌गतानुमाना
कुरुते यत्र सरस्वती प्रतिष्ठाम् ॥३॥

2957 भक्त्यैकभावितमनाः प्रभवे त्रिकाल-
कल्याणि यत्कथयते हितभागिभृत्यः ।
तस्याशु नूनमवधीरणमार्यवृत्ताः
पश्यन्त्यनर्थपरिणाममितोऽपि केचित् ॥४॥

2958 दैत्योदधेरस्य च वाक्यरत्नै-
र्विशद्भिरन्तः श्रवणोदरेभ्यः ।
तटाचलानामिव कन्दरेभ्यो
निरस्तमेषां घनमन्धकारम् ॥५॥

---

१. C स्थितेऽपि तस्मिन्नपि ।

2959 प्राप्ता सुवर्णघटनां शुभबीजसूति-
हेतुर्गृहीतहृदयातिसुवृत्तभावात् ।
वाणी सतो मधुरतामनिशं वहन्ती
[1]कं कर्णिका च न हरेदिह पङ्कजस्य ॥६॥

2960 गम्भीरघोष-परिपूरित-दिग्विभाग-
मस्मिन्पुरः स्फुरति वारिमुचीव[2] तारम् ।
[3]दैत्याधिनाथ ! समरोत्कलिका भटाना-
मभ्युल्लसन्ति शिखिनामिव चन्द्रकोर्व्यः ।७॥

2961 विभिन्नचित्तैः प्रविभिद्यमान-
मेभिर्वचः साध्विति मा मनिष्ठाः ।
विवेकभाजो विरला हि लोके
व्यतीतसंख्या ननु सन्ति मूर्खाः ॥८॥

2962 प्रायः क्लेशैरपि गुणैर्बहुमानगुर्वीं
संभावनां विदधदात्मनि मूढचेताः ।
विभ्रन्मनो गुणमहत्स्वपि सावहेलं
हास्यत्वमेव लघुवृत्तिरुपैति लोकः ॥९॥

2963 दूरव्यपोढचरितातिशयाः स्वशंसां
कुर्वन्ति नीचमतयो रसनासहस्रैः ।
श्लाघ्यात्मनां गुणगणग्रहणे तु नूनं
स्तम्बेरमा इव भवन्ति विवृत्तजिह्वाः ॥१०॥

2964 सन्मण्डलस्थितिकृता तनुनापि नूनं
कोदण्डदण्ड इव भाति गुणेन साधुः ।
नीचस्तु तस्य सरलोन्नतसाधुवृत्तेः
सम्भाव्यते कुणिरिव ग्रहणेऽप्ययोग्यः ॥११॥

---

१. B किं कर्णिका for कं कर्णिका ।
२. B वारिषु स्वायतारम् ।
३. C दैत्याधिनायमकरोत् for दैत्याधिनाथ समरोत्कलिका ।

2965 यः सज्जनो जगति यश्च खलैकवृत्ति[1]-
द्वविप्यलीकवचसावभिदध्महे तौ ।
एको गुणानसत एव यतः परस्य
वक्तीतरः किल सतोऽपि विनिह्नुते तान् ॥१२॥

2966 आरोप्य दूरमसतोऽपि गुणान् ब्रवीतु
साधुः खलस्तु तदपह्नववृत्तिरास्ताम् ।
चेतः समाश्वसिति यस्य पुनः प्रकर्ष-
पर्यन्तगेष्वपि न तेषु स कश्चिदेकः ॥१३॥

2967 आवर्ज्यतेऽवसर एव हि चित्तवृत्ति-
रत्यन्तदक्षिणतया सुजनस्य वाग्भिः ।
प्राप्ते मधावविरतं नवचूतयष्टि-
रुल्लास्यते मलयमारुतवेल्लनाभिः ॥१४॥

2968 वक्त्रश्रियं वितनुते नवसिन्धुवार-
पुष्पप्रकाण्डलवलीव सुतः शुचिश्रीः ।
शूलं करोति शिरसो विषमञ्जरीव
कर्णे कृता खलजनस्य तु वागभीक्ष्णम् ॥१५॥

2969 आबिभ्रतः खलु कलावति पक्षपात-
मुद्धृत्तकामजयिनो वृषयानभाजः ।
वाक्यं मलीमसमपि प्रतनोति कण्ठ-
शोभां सतो विषमिव त्रिशिखायुधस्य ॥१६॥

2970 गाम्भीर्यशालि हृदयं महतामगाध-
धैर्यं भवत्यनुकृताखिलसागराम्भः ।
प्राप्तं निसर्गलघु-सत्त्व-समाश्रयत्व-
मन्ये तु तद्दधति तुल्यमुदुम्बरस्य ॥१७॥

---

१. C सुखैकवृत्ति for खलैकवृत्ति ।

2971 साधारणैरपि गुणैः बहुमानमेति
भूयिष्ठमेव पुरुषो लघुचित्तवृत्तिः ।
लोकोत्तरैरपि न तैरपरस्तु धत्ते
दोलायमानमतिरुद्धरकंधरत्वम् ॥१८॥

2972 यस्मिन् परिस्फुरति शेषगुणप्रकाशो
मन्दायते शशभृतीव च तारकौघः ।
[1]सन्तोषिणो जगति सोऽपि गुणोऽस्तु नाम
तेनापि चेतसि मदो धिगपत्रपत्वम् ॥१९॥

2973 ख्यातिं पुमानिति[2] पुमान् भजते स एव
योऽलङ्कृतो गुणगणैः शिशिरांशुशुभ्रैः ।
सोऽश्मैव संप्रति मणिः प्रथिताकरोपि[3]
यस्य स्फुरन्ति न करा दलितान्धकाराः ॥२०॥

2974 आलम्बितेऽपि हि विकासविधौ निरर्थ-
मानावलेप-पवनक्षत-बुद्धिगन्धाः ।
वृन्तावशेष-कुसुमाकृतयो न लक्ष्मी-
मासादयन्ति पुरुषा गुणहीनरूपाः ॥२१॥

2975 स्वच्छन्दता खलगिरां न भवन्ति वस्तु-
तत्त्वस्पृशो जगति केचन तासु शब्दाः ।
आत्मस्तुतिं सुजन-सच्चरितापलाप-
पापञ्च तेन विदधीत कथं न मूढः ॥२२॥

2976 योग्योऽहमेव मम ये तु गुणा न सन्ति
तान्दूषयेदसत एव कथं ह्यसाधुः ।
लोकापवाद-परिधूसरतामवाप्तै-
र्दूयन्त एव गुणिनो ननु तैरभीक्ष्णम् ॥२३॥

---

१. B सन्तोषिणा for सन्तोषिणो । २. B पुमानिव for पुमानिति ।
३. C प्रथिताकरोति ।

2977　ये निर्गुणाः परगुणेषु दृढानुरागा-
स्तेभ्यो नमः सकल-सज्जनशेखरेभ्यः ।
येषां पुनर्गुणवतामपि साभ्यसूयं
चेतोऽन्यदीय-गुणसंपदि धिक्खलांस्तान् ॥२४॥

2978　शून्यात्मनस्त्वभवनिर्जगतीह तस्य
पुंसोऽनिशं परगुणग्रहणाभियोगे ।
धत्तेतरां सदसि संयुगसङ्कटे च
जिह्वेन्द्रियं करतलञ्च न यः किणाङ्कम् ॥२५॥

2979　आश्चर्यवृत्ति हृदयं महतामहो नु
विस्तीर्णता-लवकणान्वयि-नाकमार्गम् ।
आवद्ध्यते तनुभिरप्यखिलं गुणैर्य-
दक्रीतदासमनिशं विमलैः परेषाम् ॥२६॥

2980　न प्राप्नुवन्ति समतामखिलैर्मदीयै-
रेते गुणैः परगुणेष्विति यान्ति नेर्ष्याम् ।
प्राप्ता च तैः सदृशताधिकताथवैषां
जातश्च साधुरपि मत्सरमूढचेताः ॥२७॥

2981　उद्दाम-मत्सर-विमूढधियो भवन्तु
मा वा परे मलिनितच्छवि-वक्त्रशोभाः ।
उद्भिन्न-पीन-पुलकाभरणो भवामि
यत्सत्यमन्यगुण-कीर्तनतोऽहमेकः ॥२८॥

2982　शक्यो न तोषयितुमात्मनि यः कृतास्थैः
संख्यातिगैरपि गुणैर्गुरुतां दधद्भिः ।
स्वल्पैरसौ परगतैः परितुष्यतीति
विस्मायि चेष्टितमहो महतस्तदेतत् ॥२९॥

2983 व्यक्तं खलुङ्कजनता-पिहितात्मनोऽपि
निर्मत्सराः सततमुन्नमयन्ति साधोः ।
सन्तो गुणान्घन-रसातल-तालुपङ्क-
मग्नान् मणीञ्जलनिधेरिव वीचिभङ्गाः ॥३०॥

2984 आत्माभिमान-विषमग्रह-निघ्नचित्त-
वृत्तेः परस्य न गुणेषु कदाचिदास्था ।
अन्योऽभिनन्दति तनूनपि तानवश्य-
मध्यात्मनो जगति मङ्गलमौक्तिकाभान् ॥३१॥

2985 कुर्वन्तु नाम बहिरन्यगुणेषु केचि-
दत्यन्त-मत्सरविमूढधियोऽभ्यसूयाम् ।
तेषां पुनर्जगति ये हृदयान्यभीक्ष्णं
नावर्जयन्ति नितरां न गुणैर्गुणास्तैः ॥३२॥

2986 प्राप्ताः प्रकर्षपदवीममृतोर्मिभङ्ग-
शीताः शशाङ्करुचयो घनमत्सराणाम्[1] ।
येषां सुखोपकरणं न गुणाः परेषा-
मात्मद्रुहो धिगधमान् हतजन्मनस्तान् ॥३३॥

2987 दत्त्वा बहिः परगुणेष्वपि साधुवाद-
मन्तस्तु मत्सर-विषानल-दह्यमानः ।
निर्वाति मूढहृदयः स्वविकल्पशिल्प-
सङ्कल्पितं कमपि तेष्वधिरोप्य दोषम् ॥३४॥

2988 श्लाघ्यः स एव निजवंश-सुमेरुकुञ्ज-
कल्पद्रुमः सुचरितातिशयेन यस्य ।
वन्द्या गुणास्त्रिभुवनेऽपि न संभवन्ति
शौरेः क्रमा इव विनिर्गतकीर्तिगङ्गाः ॥३५॥

---

१. C गुरुमत्सराणां for घनमत्सराणाम् ।

2989 तेजोदरिद्रा वरमस्तु बुद्धिः
प्रज्ञाविहीनेन किमोजसा स्यात् ।
किं वारिदे गर्जति दत्तझम्पः
प्राप्नोति नाशं शरभो न तेन ॥३६॥

2990 चन्द्रप्रभाधवल-चामरचक्रवाल-
लीला-विधूननिभेन भयाकुलत्वात् ।
येषां जगत्त्रय-कचग्रह-दुर्निवार-
रूपा विराजति जरेव पलायमाना ॥३७॥

2991 महिषं ममापि रणमूर्ध्नि मा वधीत्
सुरपक्षपात-रभसेन चण्डिका ।
इति बिभ्यतेव समवर्तिना भयं
परिजह्रिरे विजितमृत्यवोऽपि ये ॥३८॥

2992 तेऽपि त्रिविष्टपसदो विजिता भवद्भि-
र्यस्यानुभाववशतो विजितैरपि प्राक् ।
कालो निरर्गलतया भुवनत्रयेऽत्र
क्रीडत्यहो जय-पराजय-लीलयासौ ॥३९॥　　तिलकम्

2993 क्रूरस्य कालकरिणो दृढदीर्घहस्त-
पाशस्य नैव ससुरासुर-चक्रवालम् ।
पर्याप्तिमेति जगदेकविधानपिण्ड-
लीलावकीर्ण-कवल-ग्रह-विभ्रमाणाम्[1] ॥४०॥

2994 दैत्याधिपा दितिजकण्ठ-विवर्तमान-
फेनच्छटा-वलय-संभरणेन यस्य ।
अद्यापि बिभ्यति वधूजन-कण्ठ-लग्न-
मुक्ताफलग्रथित-हारलतावलीभ्यः ॥४१॥

---

१. C विभ्रमेण for विभ्रमाणाम् ।

2995 आयोधनेषु निरजीयत सोऽपि येन
वज्रानलेन्धन-धराधर-पक्षलक्षः ।
किं कथ्यते क इव वा जयिनश्चयोऽस्ति
क्रोडीकृतं जगदनित्यतया हि सर्वम् ॥४२॥ तिलकम्

2996 पृथ्वीविनाशाहित-शोकदीनाः
कल्लोल-सङ्घट्टरवैर्दिगन्तान् ।
आक्रन्दशब्दैरिव पूरयन्ति
परस्परं संवलिताः समुद्राः ॥४३॥

2997 शेषस्य कुञ्चित-कराल-शिखावितान-
विस्तारशून्य-परिपीवर-कण्ठपीठम् ।
स्रस्तांश-मन्थर-विनिःश्वसितं बिभर्ति
विश्लिष्ट-भार-लघुवृत्ति-फणासहस्रम् ॥४४॥

2998 अपोढभारातिशयस्य शौरि-
कूर्मस्य विस्रस्त-विकूणिताङ्घ्रेः ।
नखाङ्कुशाघात-विघट्टनोत्थां
न दिग्गजेन्द्रा रुजमाप्नुवन्ति ॥४५॥

2999 पाताल-तालुतलमेत्य वनान्तवल्ली-
श्यामत्विषं कमठपृष्ठ-कृतास्पदो यः ।
दोर्दण्डमण्डलमुखेन निनाय दूर-
मुर्वीं कलिन्द-तनयामिव सीरपाणिः ॥४६॥

3000 क्वासौ हिरण्याक्षमहासुरेन्द्रः
क्रोडीकृतिर्यं विनिहत्य शौरिः ।
सुरेन्द्रलक्ष्म्या सममुज्जहार
पातालमग्नां सहसा धरित्रीम् ॥४७॥ पञ्चभिः कुलकम्

3001 उत्तम्भितेऽवनितले सहसैव भिन्न-
पाताल-रन्ध्रगत-संतमसाः करौघाः।
शेषोत्तमाङ्ग-मणिदीधितिभिः सहोष्ण-
रश्मेः प्रतापित-भुजङ्गगणा घटन्ते ॥४८॥

3002 कल्पादिकोल-कलनाकुलितां सलील-
मुर्वीं दिदृक्षुरिव विस्मयमानचेताः।
विस्रस्त-मूलशिथिलातनु-कर्णशुक्ति-
रुत्कन्धरीभवति कूर्मपतिः स्थिराङ्घ्रिः ॥४९॥

3003 दंष्ट्राटनिक्रकच-निर्दलितालगर्द-
मम्भोधिमध्यभुवि सञ्चरतः सलीलम्।
लक्ष्यीभवत्यवनिरायत-कर्णरन्ध्र-
निष्पीत-तत्सलिल-दृश्यतया पुरस्तात् ॥५०॥

3004 घोणानिलेनाभिहता पतन्ती
रसातलान्तः पुनरेव भूमिः।
आलम्बते गाढकरग्रहेन्दु-
मरीचि-गौरच्छविमाशु दंष्ट्राम् ॥५१॥

3005 पोत्राभिघात-दलिताचल-चक्रवाल-
मुत्तंभितातनु-रसातल-तालुनः क्ष्मा।
आभाति मुक्त-पृथु-शेषफणास्पदेव
गाढावलम्बित-निशाकर-गौरदंष्ट्रा ॥५२॥

3006 वपुरलघु विघूर्णयन्विनिघ्नन्
घुरुघुरु-घुर्घर-घोर-घोषघोणम्।
विघटयति सटानिलाभिघातै-
रनघ-घटाघटनान्धनाघनौघान् ॥५३॥

3007 पोत्रस्थल-स्थगित-वारिद-वर्त्मरुद्ध-
विस्रम्भ सञ्चरण-सौष्ठव-जिह्मयमानाः ।
आमन्वतेऽन्य-भुवनोदर-संप्रवेश-
मुत्कीर्ण-कर्ण-कुहराश्रयिणः समीराः ॥५४॥

3008 तारागणैरभिमुखं तरसा पतद्भि-
रभ्यर्च्यते धुत-सटानिल-घट्यमानैः ।
दिग्देवताकरतलप्रहितैर्धरित्री-
मुक्ताफलाग्रनिकरैरिव पोत्रलग्ना ॥५५॥

3009 निर्धौतामल-करवाल-नीलभासि
ब्रह्माण्डं वपुषि समग्रमश्नुवाने ।
आकाशं दधदवकाशशून्यताञ्च
स्वच्छायाच्छलत इवाखिलं निलीनम् ॥५६॥

3010 पातालरन्ध्रतमसेव नवाभ्रनील-
मालिङ्गितं दुरुपलक्ष्यतया परीतम् ।
पोत्रस्थल-स्थगित-भानुनिशान्धकारे
दंष्ट्रा व्यनक्ति वपुरुत्थितमन्तरिक्षे ॥५७॥

3011 इत्युद्धृतक्षितितलस्य हरेर्वराह-
रूपस्य तत्पुर इवाम्बुदनीलमीक्षे ।
शालूककन्दमिव कुन्दलतावदात-
दंष्ट्राटनि-क्रकच-कोटि-विलम्बमानम् ॥५८॥

एकादशभिः कुलकम्

3012 भेदोन्मुख-स्वच्छ-नखात्मदर्श-
विरूपष्ट-बिम्बोदय-घोरवक्त्रे ।
यथार्थतामेव चिरादुपैति
पञ्चाननत्वं करकालचक्रे ॥५९॥

3013 जृम्भाविकासि-मुखकन्दर-निर्गता च
जिह्वा समुद्वहति वह्निशिखापिशङ्गी ।
निःश्वासमारुत-विकम्पित-गूढनाभि-
पद्मोच्छ्वसच्छिथिल-पाटलपत्र-लीलाम् ॥६०॥

3014 गम्भीर-तारतर-घर्घर-घोरघोष[1]-
शिक्षोपदेशरभसादिव नाकमार्गे ।
संवर्तवारिदघटा घटिताभ्युदेति
संरम्भ निर्धुतसटानिलघट्टनाभिः ॥६१॥

3015 निपतति घनविस्फुलिङ्गचक्रो
विकटमुखोदरकन्दरात् कृशानुः ।
सुरगिरिरिव कीर्णरत्नराशिः
प्रलयनिरर्गल-मारुतव्यपास्तः ॥६२॥

3016 छायाविडम्बिततडित्प्रचया विभाति
रोषारुणा दितिजवक्षसि संपतन्ती ।
अन्तर्निगूढ-निवसन्नवनाभिपद्म-
गर्भस्रवन्मधुमदाविलितेव दृष्टिः ॥६३॥

3017 निर्धूत-केसरसटानिल-घट्यमान-
मिन्दोः पुरः पतति मण्डलमन्तरिक्षात् ।
तीक्ष्णाग्रकोटि-नखदारण-संभ्रमेण
लक्षीकृतं सपदि रूपमिवोपहर्तुम् ॥६४॥

3018 विनिष्पतद्घोरहुताशवर्ति-
प्रकोपहुङ्कारविरावभीताः ।
दिशो भवन्ति स्फुटिताचिरांशु-
रक्तच्छटाविच्छुरिताम्रमार्गाः ॥६५॥

---

१. C भीमघोष for घोरघोष ।

3019 आकर्ण्य [1]रुञ्जितरवं जितवारिगर्भ-
संवर्तकालजलद-स्तनितातिघोरम् ।
अङ्गेषु भीतिभरसङ्कुचिता निजेषु
वाञ्छन्ति दूरमिव दिक्करिणः प्रवेष्टुम् ॥६६॥

3020 करकलित-कराल-चक्रधारा-
परिणतयेव नखाग्रकोटिभागाः ।
विघटित-विकटास्थि-जत्रुवक्षो
विदधति तीक्ष्णतया परीयमाणाः ॥६७॥

3021 [2]अङ्के कुनाटक इवोत्तमनायकस्य
नाशं कविर्व्यधित यस्य मुरारिरित्थम् ।
आक्रान्तकृत्स्नभुवनः क्व गतः स दैत्य-
नाथो हिरण्यकशिपुः सह बन्धुभिर्वः ॥६८॥ दशभिः कुलकम्

3022 सुरासुरव्रात-किरीटकोटि-
रत्नप्रभापाटलिताङ्घ्रिशाखा ।
सर्वात्मना संह्रियते स्वमूर्तिः
पूर्वं ततो दानववंशलक्ष्मीः ॥६९॥

3023 सम्पीडितावयवसन्धिगताः कथञ्चि-
दीषद्विवृत्य सरितोऽभिमुखं व्रजन्त्यः ।
[3]यान्ति प्रतीपमतिसङ्कट-कुक्षिरन्ध्र-
बद्धास्पदोदधितरङ्ग-विघट्यमानाः ॥७०॥

3024 आबद्धतोष-बलिदानवहस्तकुम्भा-
दर्घाम्भसा निपतितं करपुण्डरीके ।
अम्भोजविष्टर-कमण्डलुतश्च दण्ड-
पादे विरुग्ण-जगदण्ड-कवाटखण्डे ॥७१॥

१. रुञ्जितं सिंहनादः (footnotes) ।
२. C अङ्कोत्थनाटक for अङ्के कुनाटक । ३. C याति for यन्ति ।

3025 निःशेष-लोकाक्रमणोत्थितस्य
कलिन्दकन्या-सलिलत्विषोऽङ्घ्रेः ।
श्यामीभवन्त्याशु दिशां मुखानि
दैत्याङ्गनानाञ्च रुचा स्फुरन्त्या ॥७२॥

3026 शेषोरगेण भुवनावसथाण्डखण्ड-
रुद्धावकाश-विरसोल्लसितेऽङ्घ्रिपद्मे ।
संभावितान्यचरणेन रसातलान्त-
रुत्तम्भ्यते कथमपि क्षितिराविशन्ती ॥७३॥

3027 उत्तस्थुषो लङ्घयितुं जगन्ति
प्रदक्षिणावर्त-पिनद्धपङ्क्तिः ।
विभाति रत्नाङ्गद-विभ्रमेण
पादस्य सप्तर्षिगणोऽधिगुल्फम् ॥७४॥

3028 विस्तारिबाहु-कर-बद्ध-मुहूर्त-संस्थ-
चन्द्रार्कमण्डलरुचा स्थगितान्तरिक्षम् ।
लक्ष्मीं [1]विभर्ति घटितापरचारुशङ्ख-
चक्रेव मूर्तिरधिकं तरसोल्लसन्ती ॥७५॥

3029 त्रैलोक्यलङ्घन-निरर्गल-दण्डपाद-
घातोच्छ्वसत्कनककर्परविभ्रमेण ।
उत्तम्भ्यते मघवतस्त्रिदशाधिपत्य-
लीलातपत्रमिव निर्जरवंशलक्ष्म्या ॥७६॥

3030 इत्थं समग्रभुवनाक्रमणेन शार्ङ्ग-
पाणेरसौ क्व नु गता बलिदानवश्रीः ।
प्रक्षालितेन चरणेन समं विरिञ्चि-
हस्तारविन्द-करकार्घजल-च्छटाभिः ॥७७॥ नवभिः कुलकम्

---

१. C बभार for विभर्ति ।

3031 लीलाविधौ भर-निपीडित-शेषभोग-
शय्याजुषो मुररिपोरपि नाभिपद्मम् ।
येनाम्बुराशितनयाहृदयेन साक-
माकम्पितं करतलाग्रविघट्टनाभिः ॥७८॥

3032 उद्भाव्यते जलतरङ्गघटामरुद्भि-
रम्भोनिधावभिहतं हरिनाभिपद्मम् ।
अद्यापि यत्करतलव्यपरोपणाभि-
घातस्मृतिव्यतिकरादिव बद्धकम्पम् ॥७९॥

3033 क्वासौ मधुर्ननु गतः सह कैटभेन
यस्यादिपूरुष-करोन्मलनादसृग्भिः ।
व्याप्तेऽम्भसि स्फुटदलक्षित-ताम्रकण्ठ-
च्छेदा झषा झषनिधौ श्वसितेषु चेलुः ॥८०॥ तिलकम्

3034 किं कीर्तितैर्बहुभिरत्र महासुरेन्द्रै-
रिन्द्रानुजेन रणभूमिषु जघ्निरे ये ।
संक्षेप एष दितिजाधिप ! मत्प्रतीप-
वार्तान्तरायमभिषेणनमिन्दुमौलेः ॥८१॥

3035 विस्पष्टदण्डघटना स्फुटमष्टमूर्ति-
सेनाधुना शिथिलित-व्यवसायबन्धा ।
अभ्येत्य भस्मधवला भवतां करोति
कम्पं जरागमदशेव विजृम्भमाणा ॥८२॥

3036 उत्तंसितोडुपति-खण्डमृणालकाण्ड-
कल्माषितानल-कडार-करालचूडम् ।
फेनच्छटा-शबलिताविरल-प्रवाल-
वल्लीनिकुञ्जमिव दुग्धमहासमुद्रम् ॥८३॥

3037 प्रत्यग्रोष्णीषचन्द्रामलकिरणशिखाश्लेषनिह्नूयमान-
प्रेङ्खच्चूडाकपालोदर-कुहर-दरी-घूर्णनामन्दवेगैः ।
शङ्खक्षोदावदातैः स्खलनकलकलारावमौखर्यभाग्भि-
र्मन्दाकिन्या जलौघैर्लुलित-गिरिसुताभाग-धम्मिल्लबन्धम् ॥८४॥

3038 स्वःसिन्धोः कपिलजटानिकुञ्जवेल्ल-
च्छेवालामलजलवीचिसिच्यमानैः ।
उत्खातां पुलिनगतैः कपालहंसै-
र्बिभ्राणं बिसलतिकामिवेन्दुलेखाम् ॥८५॥

3039 आसाद्य संयुगमुखे शशिखण्डमौलि-
मह्नाय जर्जरित-दुर्धरधैर्यबन्धाः ।
मुक्ताभिमानलघवः [1]ककुभो भजन्ति
सार्धं तदीययशसा न चिरेण दैत्याः ॥८६॥ चक्कलकम्

3040 उद्दण्डाम्भोजखण्ड-श्लथ-निबिड-पुट-क्रोडधूलीकडार-
क्रीडत्कण्डूलगण्डामरगज-मृदितापाण्डु-डिण्डीरपिण्डा ।
पिण्डेशूराः पुरो वः पुनरपि लडहाखण्डलस्त्रीस्तनाग्र-
प्रेङ्खत्कल्लोलकाण्डा भवति सुरसरिन्मत्तकारण्डवश्रीः ॥८७॥

3041 जृम्भारम्भाभिराम-श्लथमुकुलमुखालक्ष्य-लक्ष्मीकपक्ष्म-
प्रेङ्खद्धूली-पिशङ्ग-भ्रमर-कवलितामन्द-विष्यन्द-गर्भाः ।
क्रीडन्त्यः कल्पवल्ली-किसलयकलिकाः कोमलाः कर्णपूर-
प्रेम्णा लुम्पन्ति हस्तैः सरभसमचिरान्नन्दने नाकनार्यः ॥८८॥

3042 तावद्बाष्पाम्बुपूरप्लुत-नयनयुग-स्वर्गनारी-कराग्रै-
र्ज्योत्स्नागौरत्विषोऽमी तव सदसि धुताश्चामरा विस्फुरन्ति ।
यावत्संहारवेलामिव न गणचमूमागतां सप्तलोकी-
चित्राकारव्यवस्था-विघटनचतुरामीक्षसे चन्द्रमौलेः ॥८९॥

---

१. ककुभः is accusative case ।

3043 संप्रत्येव क्रोधवह्नौ पतङ्गा
जाता गेहेनन्दिनो यन्न[1]यूयम् ।
तन्मे [2]नाज्ञामण्डलस्रग्विभूषां
प्राप्तो मूर्धा धूर्जटेर्दैत्यनाथाः ॥९०॥

3044 इत्याक्षिप्य प्रगल्भं दनुतनुजपतीन् रोषरूक्षारुणाक्षां-
स्तत्कालालङ्घ्यतेजः प्रसरगुरुभर-व्याहतार्कप्रकाशः ।
पिंन्षन् रत्नाङ्गदालीं धुतकपिशरजः कल्पिताशाङ्गरागां
साङ्गारापाङ्गदृष्टिः कथमपि कुपितस्तत्सभां दूत औज्झीत् ॥९१॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवेराजानकश्रीरत्नाकरस्य कृती रत्नाङ्के हरविजये महाकाव्ये दूतप्रतिगर्जितम् नामाष्टात्रिंशः सर्गः ।

---

१. C यत्र for यन्न । 'न्न' is clearly written ।

२. C राज्ञां for नाज्ञाम् ।

## एकोनचत्वारिंशः सर्गः

3045 [1]निष्क्रम्य काञ्चनगिरेरथ नाकसिन्धु-
कल्लोलशीकर-कण-क्षपिताध्वखेदः ।
मज्जन्नमर्षभुवि पार्षदपुङ्गवोऽसा-
वभ्याजगाम शशिशेखरराजधानीम् ॥१॥

3046 तस्मै सभातलगताय कृतप्रणामः
सर्वं न्यवेदयदराति-विचेष्टितं तत् ।
तस्याज्ञयाथ समरप्रवणस्य दध्यौ
नन्दी जगत्त्रयजुषां प्रमथाधिपानाम् ॥२॥

3047 अभ्येयिवांस्यथ गणाधिपसाधनानि
पाताल-शैल-जलधि-त्रिदिवालयेभ्यः ।
सन्दर्शयन्नसकलेन्दुभृतो दिदृक्षो-
रित्यग्रतः प्रणतमौलिरसाववोचत् ॥३॥

3048 आलोकयोत्कलकलानि रणोत्कचित्त-
वृत्तीनि नाथ ! गणनाथबलान्यमूनि ।
निःशेष-दैत्यपृतना-दलनोत्सुकानां
तुल्यानुभावबलता भवतैव[2] येषाम् ॥४॥

3049 विभ्रज्जटाः फणिश-शुकशिखापिशङ्गी-
राकाशयान-गुरुवेग-विलोलबन्धाः ।
वैकुण्ठ-नाभिसरसीरुह-केसराग्र-
सङ्क्रान्त-धूलि-कपिला इव दैर्घ्यभाजः ॥५॥

---

१. B adds ओं in the begining ।

२. C retains भवतैव while A & B read भवतेव ।

3050 एकेन मासमिव दर्शितपर्वसंधि-
माषाढमाकलयता करपल्लवेन ।
अन्येन विष्टर-सरोरुह-खण्डनार्थि-
हंसोपमास्पदकमण्डलुना विराजन् ॥६॥

3051 पुञ्जीकृताच्छ-शुभबीज-मनोहरेण-
रत्नाक्षसूत्रवलयेन विराजमानः ।
अंसावलम्बि शबलं मृगचर्म बिभ्र-
दाकाशदेशमिव लग्नमुदंशुतारम् ॥७॥

3052 [1]अच्छाङ्गुलीयकशिखा-शिखरस्थ-हारि-
हारीत-देह-हरिताश्म-मरीचिचक्रः ।
अम्भोजिनीवनमिवासनपुण्डरीक-
खण्डान्तरप्रसवकारणमुद्वहंस्तम्[2] ॥८॥

3053 वेधाः स्वयं स विधुतासनपुण्डरीक-
पक्ष्मच्छटाविकट-कोटिपरागपिङ्गाः ।
आसन्न-दैत्यदलनोत्सव-विप्रकीर्ण-
पिष्टातका इव दिशः समुपैति कुर्वन् ॥९॥　　पञ्चभिः कुलकम्

3054 शार्ङ्गं नदत्यधिविरोपितकोटिलग्न-
कल्पक्षयानलशिखोज्ज्वल-शिञ्जिनीकम् ।
शौरेः प्रवाल-वलय-प्रभयावलीढ-
[3]कल्लोलमण्डलमिव क्षुभितस्य सिन्धोः ॥१०॥

3055 वक्षःस्थलाम्बर-कृतास्पद-कौस्तुभार्क-
विस्पष्ट-पाटलमयूख-शिखावमृष्टम् ।
नीलोत्पलाकरमिव स्वयमेष मुक्त-
कोषं समीकरभसेन बिभर्ति खड्गम् ॥११॥

---

१. C स्वच्छाङ्गुलीयक for अच्छांगुलीयक ।
२. C मुद्वहन्ताम् for मुद्वहंस्तम् ।　　३. C कल्लोलमण्डलमिव ।

3056 अस्यातसीकुसुमदामरुचः कृपाण-
पट्टेन निर्मलकरालकरेण बाहुः ।
सङ्ग्रामभूमिषु भयङ्करतां कलिन्द-
कन्याजलौघ इव कालियभोगिनाप ॥१२॥

3057 आताम्र-कौस्तुभ-मरीचि-शिखावलीढं
युद्धोन्मुखी मुखमपावृतमुद्वहन्ती ।
दैत्येन्द्रशोणित-रसासवपानगोष्ठी-
योग्यामिवास्य सुरनाथ ! गदा विधत्ते ॥१३॥

3058 अस्याधिपाणि रचितस्थितिरेष लक्ष्मी-
मीषद्विनिद्र-मुखकैरवकोरकश्रीः ।
कुन्दत्विषा दशनचन्द्रिकयावकीर्ण-
मूर्तिर्बिभर्ति शशिशेखर ! पाञ्चजन्यः ॥१४॥

3059 वक्षःस्थ-कौस्तुभमरीचि-विलङ्घ्यमान-
मस्याश्चकास्ति करपङ्कजवर्ति चक्रम् ।
प्रत्यग्रटङ्कविनिकुट्टन-मुक्तरक्त-
धारारुणीकृतमिवाहिमरश्मि-बिम्बम् ॥१५॥

3060 दैत्यास्त्र-विघ्न-विकटाग्नि-शिखा-सहस्र-
निष्ठ्यूत-धूसरित-दिङ्मुखवर्ति धूमम् ।
वज्रं पुलोमतनयापतिरप्यमुक्त-
नीलाभ्रगर्भमिव बिभ्रदसावुपेतः ॥१६॥

3061 हेलाधुतश्रवणताल-पलाशकोटि-
भागाधिरूढ-धवलच्छवि-शङ्खहंसम् ।
आभाति भासुररुचिर्दहनोऽधिरुह्य
सूर्यप्रकाश इव पाण्डुरपुण्डरीकम्[1] ॥१७॥

---

१. B दिग्गजं (footnotes) ।

3062 एषोऽञ्जनद्विरदमूर्जितदानवारि-
धारान्धकार-भर-निह्नुत-भास्करांशुम् ।
पश्याञ्जनाचलमिवोन्नतगण्डशैल-
मारुह्य संयुगरसान्मरुदभ्युपेतः ॥१८॥

3063 मेराविव स्फुरितकाञ्चनगौरभासि
संहारधूमनिकराञ्जनमेचकार्चिः ।
स्तम्बेरमे कृतपदस्तरसा परैति
पश्यामरेश ! यम एष गृहीतदण्डः ॥१९॥

3064 श्मश्रुप्ररोहजटिलं भुवनत्रयैक-
ग्रासस्पृहाविकृतमूर्ध्वपिशङ्गकेशम् ।
वक्त्रं दधद्विकटमादिवराहघोर-
घोणाभिघात-दलितावनि-रन्ध्ररौद्रम् ॥२०॥

3065 निःशेष-वध्यजनता-करवीरपुष्प-
[1]शेषामिवेक्षणरुचिं दधतस्रताम्राम् ।
आरुह्य कासरमखण्डित-दण्डचण्ड-
हस्तः पुरोऽस्य रभसादुपयाति मृत्युः ॥२१॥ युगलकम्

3066 संध्यानुबन्धि गगनं चटुलीकडार-
चूडातडिद्भिरिव पश्य विदर्शयन्तः[2] ।
आयान्ति कज्जल-मलीमसदेह-दीप्ति-
लुप्तातपप्रसरमीश्वर ! यातुधानाः ॥२२॥

3067 पाशी स्पृशन् स्पशमिवान्तकरस्य पाश-
मारुह्य नागमुपगच्छति सुप्रतीकम् ।
आलोल-कर्णशिखरानिल-वेगकृष्ट-
कुम्भस्थल-स्खलित-मौक्तिकतारहारम् ॥२३॥

---

१. B मालामिवेक्षण for शेषामिवेक्षण । २. C विमर्शयन्तः for विदर्शयन्तः ।

3068 पश्यार्थनाथमवलम्बितशंखपद्म-
मग्रे गदादलित-[1]दैत्यचमूत्तमाङ्गम् ।
शार्ङ्गायुधं जवचतात्र गरुत्मतेव
पञ्चप्रभेण करिणान्तिकमापतन्तम् ॥२४॥

3069 सिंहाजिनानि परिधा-रभस-व्युदास-
संदष्टतारकतया घटितान्युरःसु ।
निर्भिन्न-गन्धगज-कुम्भतटावसक्त-
मुक्ताफलैरिव नखैः प्रविभान्ति येषाम् ॥२५॥

3070 तन्वन्ति वीतवसनेषु वपुःषु मौलि-
मुग्धामृतांशुकलिका रभसेन येषाम् ।
ज्योत्स्नातपाम्बरमलं विमलं स्वकान्ति-
सन्तान-संशयित-भूतिपरागलेखम् ॥२६॥

3071 अभ्यापतन्ति त इमे विकटोन्नतानि
रुद्राः सुरेश ! फणिकङ्कणिभिः कराग्रैः ।
आस्फाल्य विस्फुरदरातिरुषा निजांस-
कूटैः सहैव कुमुदानि ककुद्मतां वः ॥२७॥ तिलकम्

3072 दानाम्बुवृष्टिमभितो विकटैः किरन्तः
संवर्तदुर्दिनघनैरिव गण्डभागैः ।
विन्यस्त-पादभर-बन्धुरितावनीध्र-
मेतेऽधिरूढवसवः करिणोऽभ्युपेताः ॥२८॥

3073 निःशेष-शात्रवकुल-प्रलयाग्निधूम-
दण्डायमान-करकृष्ट-कृपाणपट्टाः ।
विद्याधराधिपतयः शिबिरं विशन्ति
पारिप्लव-श्रवणकुण्डल-गण्डभागाः ॥२९॥

---

१. B वैरि for दैत्य ।

3074 आसज्य [1]सज्जसमरा विशिखान् धनुःषु
हस्ताङ्गुली-लघुविवर्तन-तारनादान् ।
एते विशन्ति शिबिरं शिवशेवधेस्ते
विश्वेऽश्विनौ च तुषिताश्च ससिद्धसाध्याः ॥३०॥

3075 निष्ठ्यूत-नाक-नगर-प्रतिबद्ध-सिन्धौ
बिम्बोदरे शबलिमानमुपादधाना[2] ।
छाया च यस्य शशलक्ष्ममयी विभाति
विष्यन्दमान-यमुनाजल-निर्झरश्रीः ॥३१॥

3076 स श्वेतदिग्गजपतेरधिरुह्य पृष्ठ-
मभ्येति दीर्घविकटैः पृतनाङ्गनानाम् ।
नेत्रोत्करैरमृतवर्षिभिरिन्दुरेष-
दत्ताञ्जनैर्निजकरैरिव दृश्यमानः ॥३२॥ युगलकम्

3077 योक्त्रीकृतैः फणिगणैरतिगाढबन्ध-
तीव्रार्ति-सीत्कृतिसमीर-निभेन-शीतान् ।
स्कन्धानिलानिव निपीय पुनर्वमद्भि-
राबद्धवाजिनि रथे रचितप्रतिष्ठः ॥३३॥

3078 कल्माषिताम्बरतलोन्नत-पक्ष्मभार-
निर्धूयमान-सितचामर-मण्डलीकः ।
[3]सङ्कोचबन्ध-परिहारधिया सलील-
मन्वीयमान इव नाथ ! कुमद्वतीभिः ॥३४॥

3079 योगाश्रितापरवपुर्जरठप्रताप-
संपत्तिरेष हरितच्छविसप्तपत्त्रः ।
भानुः शरत्समयविभ्रम एति पश्य
रिक्तीकृतावजितवासववासरश्रीः ॥३५॥ तिलकम्

---

१. B सज्जनपण for सज्जसमरा । २. C दधाने ।
३. C सङ्कोचबद्ध for सङ्कोचबन्ध ।

3080 आरूढ-गूढचरणोल्वण-मार्गणानि
कल्लोल-चापवलयानि विनिर्धुवन्तः ।
सप्ताप्यमी कलकलाकुलितान्तरिक्ष-
मभ्यागता जलधयः सतरङ्गिणीकाः ॥३६॥

3081 क्षोणीभृतोऽप्युपगताः शिविरं नवाभ्र
कारागृहान्कटकभूमिषु बिभ्रतस्ते ।
बन्दीकृतक्षपित-पक्षति-दृष्टसार-
वज्रार्भकानिव च गर्भगताचिरांशून् ॥३७॥

3082 संवर्तवारिदघटापि गभीरघोर-
घोषानुबन्ध-बधिरीकृत-सप्तलोका[1] ।
अभ्येति वः समरदुन्दुभितां चिकीर्षु-
रेषां तडित्किरणकोणकृताश्चितश्रीः ॥३८॥

3083 अभ्यापतन्ति विकसत्फणचक्रवाल-
रत्नोत्करैः किरणपल्लवितान्तरिक्षाः ।
दिक्पद्मिनीर्विकच-पाटलपुण्डरीक-
खण्डा इवोरगबलानि विदर्शयन्ति ॥३९॥

3084 [2]उद्धूत-चन्द्रकर-पाण्डुर-चामरौघ-
मोजस्वितां दधदधःकृतवातरंहः ।
आभाति कर्कशवलं सुरराजसैन्य-
मश्वीयमश्चिततर श्व रसत्खलीनम् ॥४०॥

3085 सव्याल-भूषणतयोन्नत-कायमान-
शोभा नितान्त-मलगर्दभ-रासभीका ।
चण्डी नरेन्द्रशिबिरक्षिति निर्विशेष-
रूपा करालकरभा रभसादुपैति ॥४१॥

---

१. C सप्तलोकान् ।　　२. B उद्धूतचक्र for उद्धूतचन्द्र ।

3086 रत्नाक्षसूत्रवलयं परिवर्तयन्ती
नक्षत्रमण्डलमिव क्षणदातितारम् ।
ब्राह्मी कराकलित-दण्डकमण्डलुश्री-
रेषा शिवात्र शिबिरे कृतसंनिधिर्वः ॥४२॥

3087 आभात्यसौ सरल-मुग्ध-मृणालकाण्ड-
कन्दावली-कवलनाकुलतां दधानैः ।
कुन्दच्छदच्छविभिरच्छ-तदीयगर्भ-
दुग्धच्छटापरिणतेरिव वाहहंसैः ॥४३॥ युगलकम्

8088 [1]उद्वृत्त-दानव-चमूपति-कण्ठपीठ-
निष्ठ्यूत-शोणित-मलीमस-शात-धारम् ।
प्राचीव दिक्तपनबिम्बमुदंशुराशि-
चक्रं दधत्युपनतानघ ! वैष्णवीयम् ॥४४॥

3089 त्रैयम्बकी कटकमेति विजिह्मकोटि-
मेषा किरीटघटितां दधतीन्दुलेखाम् ।
भास्वत्तृतीयनयन-भ्रुकुटिव्युदस्त-
विन्यस्त-भास्मन-पराग-ललाटिकाभाम् ॥४५॥

3090 चामुण्डया परुषभस्मपरागपूर्ण-
माकीर्णमस्थिशकलैः सकपालखण्डम् ।
बिभ्राणया वपुरधिष्ठितमीश ! दूर-
मेतत् श्मशानगृहदेवतयेव सैन्यम् ॥४६॥

3091 चन्द्रस्य च प्रतिकृतिः कृतरागभङ्ग-
चेतः प्रसादधवलांशुसुधामरीचिः[2] ।
आगच्छति च्छुरितदिक्छिबिरं तवाच्छ-
हासच्छटाभिरियमुच्छलिताम्बुराशिः ॥४७॥

---

१. उद्वृत for उद्वृत्त । २. B, C सुधाघुनीभिः ।

3092 प्रेङ्खत्कपालरशनागुणरासभीय-
चर्माम्बराङ्कित-भयङ्करमूर्तिरेषा ।
याम्या तवैति शिबिरं शिव ! शावहस्त-
कर्णावतंसकलनाकुलिताननश्रीः ॥४८॥

3093 आकस्मिक-प्रलयघस्मर-वह्निहेति-
भस्मीकृताखिल-कुलाचलनिर्विशेषैः ।
शेषां निबध्य धवलैरपि लोकपाल-
पालीकपालपटलैरियमुत्तमाङ्गे ॥४९॥

3094 गङ्गातरङ्ग-परिमृष्ट-विटङ्ककोटि-
खट्वाङ्गसङ्गि-परमेष्ठिजटानिकुञ्जा ।
प्रेङ्खत्परेतपतिपत्र-विषाणगर्भ-
निष्पीतसप्तभुवनक्षतजासवश्रीः ॥५०॥

3095 अध्यास्य रासभसभाधिपतिं त्रिलोकी-
संहाररागरभसेन सभीति-सैन्यम् ।
संरम्भभास्वरमुखी बिसभङ्गगौर-
दन्तांशुरेति शिबिरं तव कालरात्रिः ॥५१॥ तिलकम्

3096 काली च कोकिल-कलापरुचिः कराल-
दंष्ट्राङ्कुरैति समरोत्कलिकाकुलैषा ।
निर्दग्धकाल ! कलिकाल-कलङ्कफेतु-
रुग्भिन्नरत्नकमलेव विदूरभूमिः ॥५२॥

3097 इति गिरमुपकर्ण्योदीरितां नन्दिनाग्रे
सकल-समर-सेना-चक्रवालं स्मरारिः ।
निजशिबिरनिवेशावासभूमीः प्रणाम-
श्लथविकटकिरीटं प्राहिणोत्तन्मुखेन ॥५३॥

3098 तिग्मांशुस्यन्दनाश्वद्रुतखुरदलितव्योमवैदूर्यरत्न-
क्षोदच्छायेऽथ सायं मलिनयति तमः पङ्कपूरे धरित्रीम् ।
रुद्धालोकाः कुलायग्रहरभसरसत्पत्त्रिनादानुबन्धै-
रन्योन्यालापमाराद्विदधुरिव निशि व्याकुला दिग्वयस्याः ॥५४॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये सैन्यसम्भारो नाम एकोनचत्वारिंशः सर्गः ।

---

चत्वारिंशः सर्गः

3099 प्राप्ते प्रभातसमयेऽथ शशाङ्कमौलि-
रुद्बोधितो विविध-मागध-सूतवाग्भिः ।
अभ्याहतानकशत-ध्वनिदत्तसंज्ञः
सेनासरिद्भिरितमैक्षत सैन्यसिन्धुम् ॥१॥

3100 तस्याथ संभ्रमवलत्फणचक्रवाल-
मुर्वीतलेऽधिपतिना फणिमण्डलीनाम् ।
संस्तम्भित-श्रवणतालमुदञ्चिताक्ष-
माकर्णितो विधुरितस्थिति दिग्गजेन्द्रैः ॥२॥

3101 ब्रह्माण्ड-खण्डतल-वारणखर्व्यमाण-
मूर्तिर्दिगन्तर-गुरुप्रतिफालदीर्घः ।
पुञ्जीकृतः क्षितितले घनतामवाप्य
भिन्दन् रसातलमिवातिभरेण भूयः ॥३॥

3102 कम्पाकुलीकृत-ससंभ्रम-लोकपाल-
पालीपुरन्ध्रिहृदयो विभराञ्चकार ।
प्रस्थानदुन्दुभिरवः क्षयकालवल्ग-
दुत्ताल-काल-करतालनिनाद-लीलाम् ॥४॥ तिलकम्

3103 उत्सृज्य संयुगरसादथ तस्य देह-
भागार्धसंधिघटनां निरियाय गौरी ।
तच्चित्तभागगत-सत्त्वविधूतभीरु-
वैक्लव्ययोगमिव मानसमुद्वहन्ती ॥५॥

3104 उन्निद्रकर्णशिखरार्पित-पारिजात-
लीलावतंसगलितैर्मधुशीकरौघैः ।
संसिच्यमानमिव कुङ्कुमपत्रपङ्क-
लेखाङ्कितं शुचि कपोलतलं वहन्ती ॥६॥

3105 लीलानतेन सकलां करपल्लवेन
लावण्यकान्तिममलामिव संप्रमार्ष्टुम् ।
प्रेङ्खत्पिनाकि-मुकुटास्पद-चन्द्ररश्मि-
धूलिच्छटा-मलिनित-च्छविमीहमाना ॥७॥

3106 एकावली विरचिता कुचमण्डलेऽत्र
तुङ्गत्वमीयुषि परस्परपीडनेन ।
तत्स्पर्धयेव सवलीत्रयतामवाप्तं
मुष्टिग्रहेऽपि शिथिलं दधतीति मध्यम् ॥८॥

3107 प्रत्यग्र-यावकरस-स्फुरणारुणाग्र-
भास्वन्नखेन्दुकिरण-प्रकरापदेशात् ।
संध्यां प्रसादनपरां गलिताभ्यसूया-
मारब्धपादपतनामिव धारयन्तीं ॥९॥ पञ्चभिः कुलकम्

3108 तस्या मुखं सरभसार्पितकान्तदृष्टिः
दृष्ट्वा चिरादथ शशाङ्ककलावतंसः ।
सन्दर्शनेषु नयनत्रितयं निमेष-
दोषोपघात-घटनोज्झितमभ्यनन्दत् ॥१०॥

3109 निर्याय तस्य वपुषः सुचिरादवाप्त-
गाढोपगूहनरसोत्पुलकानुबन्धः ।
प्रस्थानमङ्गलविधिर्विदधे तयाथ
सेवोत्सवप्रवणमातृगणोपनीतः ॥११॥

3110 तस्यापिनेहुरभिमन्त्रितमात्मनैव
वक्षःस्थले गणचमूपतयः कथञ्चित् ।
कण्ठप्रभाशबलभासि पिनद्धलोह-
जालान्तरभ्रमविमुग्धधियस्तनुत्रम् ॥१२॥

3111 मन्दाकिनी-सलिल-निर्झर-सिच्यमान-
भास्वत्तृतीयनयनानलधूमदिग्धः ।
तस्याततायिशरपातभियाधिमौलि-
संवीतकङ्कट इवामृतरश्मिरासीत् ॥१३॥

3112 तत्काललोलखुरसिन्धुतरङ्गभङ्ग-
विस्रस्तबन्धलुलितं च जटाकलापम् ।
उष्णीषभोगिपतिरेव बबन्ध तस्य
गाढं पुनः प्रतिदिशं फणमण्डलीभिः ॥१४॥

3113 छायान्धकार-कलुषीकृत-पीनकण्ठ-
पीठस्फुरद्भुजगराजफणामणिश्रीः ।
तस्याजिमङ्गलनिबद्ध-नवेन्द्रनील-
कण्ठत्रविभ्रममधत्त च कालकूटः ॥१५॥

3114 दंष्ट्राकराल-मुखकन्दर-निर्यदग्नि-
ज्वालावली-दुरुपलक्ष्य-कराल-जिह्वम् ।
शूलं रुषा रि-रुधिरासव-पानगोष्ठी-
संरम्भलोल-विकटौष्ठपुटं जजृम्भे ॥१६॥

3115 भोगीन्द्र-भोग-कषणप्रतिपन्न-मध्य-
कार्श्यं पुरा जलनिधेर्मथनप्रसङ्गे ।
तस्याथ मन्दरमिवाहिपतिश्चकार
कोदण्ड-दण्डमधिरुह्य सनाथकोटिम् ॥१७॥

3116 सङ्ग्रामदोहदरसादिति शीतरश्मि-
मौलौ पिनद्धकवचे वचसाथ तस्य ।
प्रत्युप्त-रत्नशकल-च्छवि-शारितानि
वर्माणि मर्मघटितानि गणाः पिनेहुः ॥१८॥

3117 संवीतलोहमयवर्मवपुर्बभार
बभ्रोरुपोढ-रणमङ्गलरत्नमालम् ।
अस्ताचलाभिमुख-पातिनिबद्धपङ्क्ति-
नक्षत्रचक्रशबलाम्बर-वर्त्मलीलाम् ॥१९॥

3118 प्रत्युप्त-लोहितक-रत्नकणांशु-सार-
नीलाभ्रकच्छ-वितनुच्छद-मूर्तिरुच्चैः ।
सौदामिनी-रुचिरदाम-मरीचिभिन्न-
लोलाभ्र-विभ्रम-मधत्त शिलादसूनुः ॥२०॥

3119 संहारधूममलिना कलधौतसानु-
भागान्तरे निपतिता रजनीव मेरोः ।
वक्षःस्थले सरस-कुङ्कुम-पङ्क-भाजि
भाति स्म कालमुसलस्य दृढाथ माढी ॥२१॥

3120 अभ्युन्मिषन्मरकतांशु-शिखासहस्र-
संलक्ष्यमाण-परभाग-तनुत्रबन्धा ।
आबद्ध-शैवललवा नलिनीव नाग-
वक्त्रस्य मूर्तिररुचत् स्फुटपुष्करश्रीः ॥२२॥

3121 हौताशनेः कवचमेचकिता च मूर्ति-
रुद्दीप्तिरत्न-घटितोरु-शिरस्त्रबन्धा ।
आभादनेक-विकटोदय-शैलशृङ्ग-
लग्नार्कबिम्बवलयेव युगक्षयद्यौः ॥२३॥

3122 उद्दाम-संयुगरस-स्फुटित-व्रणोत्थ-
रक्तच्छटा-विकटविन्दु-निवद्धरन्ध्रम् ।
प्रत्युप्त-दीप्ततर-नूतन-पद्मराग-
माखीद्विवातिगुरुदंसनमग्निकस्य ॥२४॥

3123 वक्षःस्थले बृहति हेतिशताभिघात-
रूढव्रण-स्थपुटित-स्फुट-संनिवेशम् ।
चण्डेश्वरस्य शुशुभे शुभलोहवर्म-
सावर्तमम्भ इव सानुतटे हिमाद्रेः ॥२५॥

3124 दुर्वारवैरि-वरवारण-वीरभद्र-
वक्षःस्थलीविनिहिता विरराज माढी ।
संवर्तमेघमलिनासुर-संप्रहार-
लक्ष्मीवधूमुख-विगुण्ठन-जालिकाश्रीः ॥२६॥

3125 अभ्रङ्कषोल्लसित-केतनवैजयन्ती-
कल्माषिताम्बरतलाः प्रतिमा-वहन्तः ।
रक्षाधिकार-नवभूति-सुधोपलेप-
पाण्डुत्विषो रचितसन्निधयः सुरौघैः ॥२७॥

3126 स्तम्बेरमा मुखरिताम्बर-शङ्खघण्टा-
ढक्कारवा धवल-चामर-चारुशोभाः ।
विस्पष्ट-दन्तमणितोरण-सन्निवेशाः
सैन्यैर्युधे विदधिरे सुरसद्मरूपाः ॥२८॥    युगलकम्

3127 प्रत्यग्र-मौक्तिक-वितान-निधानकुम्भ-
रक्षाकुलाजगर-विभ्रमहस्तदण्डाः ।
रेजुर्गजा विकच-कीचक-यष्टि-कोटि-
वेल्लद्विलोल-कदलीविकरालपृष्ठाः ॥२९॥

3128 कुम्भस्थलीनिहित-मङ्गलमालिकाग्र-
विष्यन्दमान-मधुपङ्कनिलीनभृङ्गाः ।
लक्ष्मीं दधुः शिखरलग्न-दवाग्निधूम-
जालाकुलाः कुलनगा इव मत्तनागाः ॥३०॥

3129 उत्कर्णताल-पवनेरित-कुम्भकूट-
सिन्दूर-धूलिपटल-च्छुरणाभिरामम् ।
उद्धूत-तामरसरेणु-पिशङ्ग्यमान-
दिक्चक्रवालमुषसीव बभूव विश्वम् ॥३१॥

3130 लीलाचलद्धवलचामर-चक्रवाल-
शारीकृताखिलदिशोऽथ सहस्रसंख्याः ।
उत्कीर्णपत्र-मकरीशत-शातकुम्भ-
पर्याणपट्ट-विनिवेश-करालपृष्ठाः ॥३२॥

3131 माणिक्यखण्ड-खचिताञ्चितहेम-भास्व-
दायानदीधिति-पिशङ्गित-दिग्विभागाः ।
उद्रश्मिरत्न-कणशारित-शातकुम्भ-
प्रेङ्खत्खलीन-सखणत्कृति-वक्त्रभागाः ॥३३॥

3132 साङ्ग्रामिकीषु कुशलैर्गमितास्तदानीं
वीथीष्वमन्दतरसः पृतनातुरङ्गाः ।
स्वेदोदबिन्दु-शबलस्तुवभागवक्त्र-
शोभाः सुधोद्गमनलग्नकणा इवासन् ॥३४॥ तिलकम्

3133 सानूकृतां विदधतोऽप्युपमानशून्या
मन्दा अपि ग्लपित-चण्डसमीरवेगाः ।
आकुञ्चितोर्ध्वखुरदण्ड-विभक्तपाद-
विन्यासचारुगतयस्तुरगाः प्रसस्रुः ॥३५॥

3134 भाति स्म मूर्तिरनलौघविघट्यमान-
माञ्जिष्ठचामरतया चतुराञ्चितानाम् ।
उत्पेतुषां किल पुरा शिखिनस्तदीय-
ज्वालाकलाप-निचितेव तुरङ्गमाणाम् ॥३६॥

3135 लक्ष्मीं दधुर्विपुलकैर्गमनैरभीक्ष्ण-
मङ्गैश्च चारुशुचिभिश्चतुरस्रपुण्ड्राः ।
पर्याणपट्टपटलैस्तुरगा निगाल-
भागैश्च देवमणिशोभितसन्निवेशैः ॥३७॥

3136 सङ्ग्रामनाटककुतूहलिनां तदानी-
मुत्थापकेन दधतो मुदमुत्तमानाम् ।
विस्पष्ट-भाण्डरुचयोऽतिविचित्ररूपा
लक्ष्मीं दधुर्जवनिकामहितास्तुरङ्गाः ॥३८॥

3137 विस्तारशालि कृतिभिः कृतरूपवर्ण-
माविद्ध-गामिक-रण-प्रविभक्तशोभम् ।
सव्यञ्जनक्रममराजत धातुवाद्य-
लीलां दधानमनुपप्लुतमश्वसैन्यम् ॥३९॥

3138 निर्धूतकेसरसटावलिताञ्चिताग्र-
भागं पतद्भिरभितः पृतनातुरङ्गाः ।
चक्रुस्तरां दिवि तदुत्पतनाभियोग-
योग्यामिव क्षणविलग्नपदैः खुराग्रैः ॥४०॥

3139 विस्ताररुद्धवसुधाः प्रतिबद्धकेतु-
सीतापटाञ्चल-विवल्गनशारिताशाः ।
सज्जाखिलोपकरणाः समराम्बुराशि-
पोतश्रियं सपदि शिश्रियिरे रथौघाः ॥४१॥

3140 आक्रान्तयानवरतं भटनायकेन
चीत्कार-सीत्कृति-मनोरमतां दधत्या ।
संदर्शितोरुयुगसज्जघनश्रियापि
तत्राभियोगसमये रथकट्यया श्रीः[1] ॥४२॥

3141 आयोधनानुगुण-वेषपरिग्रहाच्च-
तेजस्विनस्तदपनुत्तय आविरासन् ।
संहारभानव इवाखिललोकसर्ग-
नाशस्फुरत्किरण-दन्तुरमण्डलाग्राः ॥४३॥

3142 शीतांशुमौलिरपि केसरिचक्रवाल-
योक्त्रीकृताहिपति-भोगसहस्रभीमम् ।
अध्यारुरोह रथमग्निशिखापिशङ्ग-
मायोधनानुगुणवेष-परिग्रहश्रीः ॥४४॥

3143 उष्णीषभोगिफणफूत्कृतिवातघात-
पुञ्जीकृत-त्रिपथगाजल-वेणिशुभ्रम् ।
तस्योष्णवारणमधार्यत भागलग्न-
माणिक्यखण्ड-खचितोन्नत-हेमदण्डम् ॥४५॥

3144 तस्य प्रकीर्णयुगलं शशिरश्मिशोभि
शब्दानुबन्धि-मणिकम्बुभुजे तदानीम् ।
पार्श्वस्थिने दुधुवतुः स्वयमभ्युपेत्य
मन्दाकिनी सरभसं यमुना च भक्त्या ॥४६॥

3145 येनाशु निधुतसटाभरमम्बराग्र-
मारोहता निशित-पाणिज-मण्डलेन ।
नक्तंमुखेषु शशभृत्प्रसभं व्यधायि
बिम्बावलम्बि-शशदारुणकान्दिशीकः ॥४७॥

---

१. A रथकर्पया श्रीः ।

3146 आकर्ण्य यस्य मदशोषविषण्णभृङ्ग-
गण्डस्थलाः सपदि रुञ्जिततारनादम् ।
अङ्गेषु भीतिभरसङ्कुचिता निजेषु
वाञ्छन्ति दूरमिव दिक्करिणः प्रवेष्टुम् ॥४८॥

3147 श्रीकण्ठशेखर-शशाङ्ककलाकराल-
वेल्लत्सटापटल-धूननवद्धरोषः ।
उत्प्लुत्य दारयितुमीहत एव वज्र-
सूचीशितैर्नखमुखैरपि मारुतं यः ॥४९॥

3148 तस्मिंस्तुषारनिकुरम्बविपाण्डुभासि
सिंहीसुते विदलिताञ्जनमेचकार्चिः ।
कात्यायनी कृतपदा श्रियमाससाद
प्रालेयशैलगत-नूतनमेघवल्लर्याः ॥५०॥ चक्कलकम्

3149 शार्ङ्गायुधोऽपि भुवनक्षयकालवह्नि-
शङ्काकुलीकृत-सुरासुरचक्रवालम् ।
तार्क्ष्यं विधौत-कलधौत-पिशङ्गपक्ष-
मात्मीयदेहभर-खर्वितमध्यरोहत् ॥५१॥

3150 तार्क्ष्योऽपि चञ्चुपुटदष्टभुजङ्गमूर्ति-
भास्वत्फणामणिरुचिच्छुरणारुणेन ।
पृष्ठेन विग्रहभरं वसुदेवसूनो-
र्जग्राह दानवरणस्य च चेतसोच्चैः ॥५२॥

3151 क्षोणीव पक्षपवनोद्धृतशैलजाल-
मुत्तिष्ठतः शितनखाग्रविदष्टमूर्तिः ।
तस्याधिनाकमतनुर्विभराञ्चकार
शोभां क्षणं चरणकोटिगताभ्रलेखा ॥५३॥

3152 पिङ्गत्विषं कवलितोरगचक्रवाल-
निर्यद्विषाग्नि-परिणामवशादिवासौ ।
विस्तारितां नभसि हेममयीं पतत्र-
पङ्क्तिं दधत्सरभसोड्डयनाय रेजे ॥५४॥

3153 उद्गच्छतो गगनवर्त्म गरुत्मतोऽथ
दूरावगाह-दृढभिन्न-रसातलाग्राः ।
आकृष्टमुक्तवसुधाः क्षणविघ्नखेद-
मातेनुरस्य गिरिसंहतयः कथञ्चित् ॥५५॥

3154 स्थूलास्थिगण्डशिखरोज्झितदण्डवारि-
धारान्धकारितदिशः सुरलोकपालाः ।
विन्यस्तशैलगुरुपादविरुग्णभूमि-
भागान्यथायथमथारुरुहुर्गजेन्द्रान् ॥५६॥

3155 तावत्प्रतीतमनसि प्रधनोत्सवाय
दर्पाद्विनिर्जितरिपौ भटचक्रवाले ।
वालाजनो बलवदाकुलतां जगाम
तत्कालसम्भ्रमविलोलविलोचनश्रीः ॥५७॥

3156 संस्तम्भिता अपि तु मङ्गलभङ्गभीरो-
र्भीरोर्विषादवशशून्यधियस्तदाक्ष्णः ।
निर्धौतकज्जलविधूसरिता निरीयु-
रिन्दीवरान्मधुकरा इव वाष्पलेशाः ॥५८॥

3157 आधीयमानमतिसंभ्रमवेपमान-
विस्रस्तवाहुलतया वुबुधेऽन्तरायम् ।
प्रस्थानमङ्गलविधानमपि प्रवीरः
सङ्ग्रामरागरभसोल्लसच्चित्तवृत्तिः ॥५९॥

3158 वद्धस्पृहं दयितया करवालयष्टि-
रालोकिता भटजनस्य करप्रतिष्ठा।
प्राप्ता शितित्वमधिकं तदपाङ्गभासा-
धौतेव तत्क्षणमराजत विस्फुरन्ती ॥६०॥

3159 पत्यौ रणाय चलिते गुरुशोकवृत्ते-
र्वामभ्रुवः सपदि कार्श्यदशां व्रजन्त्याः।
माणिक्यकम्बुरवनौ पतितः कराग्रा-
ल्लावण्यचन्द्रपरिवेष इव व्यराजत् ॥६१॥

3160 वक्त्रं विलोकयितुमूढरसा चिराय
पत्युर्वधूर्निहितमङ्गलरोचनार्द्रान्।
दोदूयमानहृदया सविशेषमेव
सिद्धार्थकान् रचयति स्म ललाटपट्टे ॥६२॥

3161 आलिङ्ग्य गाढमपरा परिचुम्बतोऽथ
वक्त्रं प्रियस्य समराय विनिर्यियासोः।
उष्णोष्ण निःश्वसित-तत्क्षण-गाढशुष्क-
ताम्बूलपङ्करसमोष्ठयुगं चकार ॥६३॥

3162 गुप्तिस्तनोरिति कृतादरबन्धमादौ
स्पर्शामृतव्यवधिरित्यपि साभ्यसूयम्।
भावद्वयाश्रयिमनाः परिरम्भ इत्थ-
मैक्षिष्ट वर्म दयितस्य वधूः पिनद्धम् ॥६४॥

3163 इति समरविमर्दौत्सुक्यभाजः प्रवीराः
कथमपि दयिताभिर्मुच्यमाना गृहेभ्यः।
सरभसमथ पुर्या निर्ययुः सोर्जगर्जं
रथ-तुरग-विमर्दक्षोभिते रत्नसानौ ॥६५॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये सैन्यसंरम्भो नाम चत्वारिंशः सर्गः।

---

# एकचत्वारिंशः सर्गः

3164 [1]अथ कथमपि तस्याः सङ्कटद्वारसीम्न-
स्त्रिदशगणवरिष्ठैरंससान्वीयमानः ।
श्रुतहरिजयशब्दः स्फीतवादित्रघोषै-
र्गिरिकटकतटान्तान्निर्जगामेन्दुमौलिः ॥१॥

3165 क्वणितमुखरघण्टाचक्रवालध्वजाग्रं
रथवरमधिरुह्य प्रस्थितस्योत्पताकम् ।
स्वयमवहितचेता मङ्गलं संविधित्सुः
सरभसमभिदध्मौ वैष्णवी तस्य शङ्खम् ॥२॥

3166 नवधवलदुकूलैः कल्पिताः सैनिकानां
शशिकरसितकीर्तिक्षीरसिन्धूर्मिभङ्गाः ।
द्विरदघनबलाकाः प्रोल्लसन्त्यस्तदानी-
मनिलवलविलोला वैजयन्त्यो विरेजुः ॥३॥

3167 स्फुटमणिपरिणाहप्रस्फुरत्पुष्करश्री-
र्द्रुतमुपरि नियन्त्रा [2]हन्तुमुत्क्षिप्यमाणः ।
उदयगिरिशिखाग्रादुरवर्त्यर्कबिम्ब-
श्रियमतनुमतानीड्डिण्डिमः कुञ्जरस्य ॥४॥

3168 प्रतिगजमदगन्धाघ्राणहेलाव्युदस्तः
स्फुरदुदरनिविष्टस्पष्टरेखोऽग्रहस्तः ।
श्रियमभृत करेणोर्नाकसंरोहणाय
द्रुतमिव सुभटानां बद्धसोपानपङ्क्तिः ॥५॥

१. B adds ओं in the beginning । २. C हर्तुमुत्क्षिप्यमाणः ।

3169 दिशि दिशि मकरन्दं पुण्डरीकोदरेभ्यः
सरभसमपि पीत्वा हारिमाधुर्यमुच्चैः ।
द्विरदपतिमदाम्भस्तिक्तमास्वादयन्तो
विरसरसनमन्तर्वक्त्रभूद्दुर्द्विरेफाः ॥६॥

3170 [1]प्रतिगजमधिकोपाद्धावतां कुञ्जराणां
सपदि मुखपटेनाच्छाद्य वक्त्राण्यलीनाम् ।
अविरलमदतोयापानगोष्ठीनिरासे
बहुगुणमपि मन्ये दोषहेतुं कदाचित् ॥७॥

3171 [2]श्रियमतनुत रक्षाभूतिविन्यासपाण्डुः
सपदि मदजलेन श्च्योतता सप्तधोर्व्याम् ।
द्विरदपतिरनीचैर्विस्फुरद्गण्डशैल-
स्त्रिदशनगरगङ्गास्रोतसेवार्कशैलः ॥८॥

3172 दधुरभिनवलाक्षारञ्जितैश्चामरौघैः
श्रियमनुकृतवात्यारंहसः सैनिकानाम् ।
खुरशिखरनिपातक्षुद्यमानाखिलोर्वी-
जनितशिखिशिखौघाश्लिष्टरूपा इवाश्वाः ॥९॥

3173 स्थगित-सकल-दिक्कानेक-संख्यानसेना
जनितगुरुभरोच्चैरन्वभूद्भूरि शंभोः ।
क्रमविधृतविमुक्तोद्दामनिःश्वासताम्य-
त्फणिपतिफणदोलान्दोलनं भूतधात्री ॥१०॥

3174 करिहरिरथपत्तिव्रातनिर्धूतधूलि-
प्रकरजनितकार्श्यामन्वबध्नादधस्तात् ।
लघुविदलनभीतिव्याकुलात्मा कथञ्चि-
त्फणनिगडसहस्रेणाहिनाथो धरित्रीम् ॥११॥

---

१. B, C ..मतिकोपात् for मधिकोपात् । २. B omits this श्लोक ।

3175 बलसमुदय ऐशेऽतीत्य गव्यूतिमात्रं
स्थितवति शिबिराग्रावासभूमीर्गृहीत्वा ।
प्रथममिव तदानीं सौगतानां प्रमाणं
द्विरदकुलमनल्पं कल्पनापोढमासीत् ॥१२॥

3176 सुरबलमवलोक्यावासितं काननाग्रे
शकुनय उरुपक्षा दूरमुत्पत्य वेगात् ।
द्रुमविटपशिखाग्राबद्धनीडप्रतिष्ठ-
स्वतनयगततृष्णाश्चेरुराकाश एव ॥१३॥

3177 कृतगुरुतरकम्पान्दोलनव्याकुलायां
भुवि विनिमितपादं जङ्गमाद्रीन्द्रकल्पैः ।
अतिनिबिडनिबद्धैः कल्पवृक्षेषु सेना-
द्विरदपतिभिरापे न त्रिपद्या विलासः ॥१४॥

3178 दृढनियमितरज्जुस्कन्धसन्दानितानां
स्रुतमदजलगण्डाभोगकाषैर्गजानाम् ।
त्वगपतदवरुग्णा काननानोकहेभ्यः[1]
सहजमपि विमूढाः कं न विश्लेषयन्ति ॥१५॥

3179 स्रुतघनघनसार-क्षोदसौगन्ध्यभाजो
मणितटकृतवीचिक्षोभमन्दाकिनीकाः ।
द्रुमगहनविलुप्तार्कांशुसन्तापशीताः
शिखरिकटकभूमीरध्यवात्सुर्ध्वजिन्यः ॥१६॥

3180 स्फुटितविकटगण्डाभोगमाद्यद्द्विरेफा
विकसदविरलैलाकन्दली-काननाढ्याः ।
उपमणिगुहमद्रेः फुल्लकोशातकीका
युवतिभिरनुयाताः केचिदासेदुरुर्वीः ॥१७॥

---

१. C काननानोकहेम्यः ।

3181 अथ शशधरमौलेः सैनिका सानुदेशे
दिशि दिशि विचरन्तः कल्पितैर्वाजिसैन्यैः ।
प्रतिभयतरलाक्षं दृश्यमाना मृगौघैः
स्थितिरिति चिरमासन् दर्शिताच्छोदनेच्छाः ॥१८॥

3182 सरभसमनुविद्धा केनचित्सादिनोच्चैः
स्फुरिततरलतारा श्यामलांशुच्छटाभिः ।
व्यवधिमिव विधातुं भीतिपारिप्लवाक्षी
हरिणयुवतिरैच्छत्संभ्रमादात्ममूर्तेः ॥१९॥

3183 द्रुततरमपि नष्टा सादिसैन्यावमर्दा-
च्चनयमनवलोक्य क्वापि तत्रैव यातम् ।
पुनरसुनिरपेक्षं कृष्णसारङ्गनागा-
त्पदमिह न विपत्तेः कस्य तृष्णाथवा स्यात् ॥२०॥

3184 श्रवणघटितमौर्वीमण्डलीभूतचाप-
च्युतिचतुरतरश्रीर्धन्विनान्वीयमानम् ।
हरिणमनपराधं मार्गणो मङ्क्षु भित्वा
त्वरितमिव विलक्षोऽलक्षितः क्ष्मामविक्षत् ॥२१॥

3185 क्षितितलगतपुङ्खेनेषुणोत्तभ्यमान-
स्फुटतरगलनालः कश्चिदुद्ग्रीव एव ।
द्रुतमिव चलितानां वल्लभानां तदानीं
हरिणशिशुरसूनामूर्ध्वमैक्षिष्ट मार्गम् ॥२२॥

3186 न खलु जगति शून्यं किञ्चिदस्तीह धाम्ना
युवतिमनुसरन्तं गर्भभारालसां यत् ।
विकटकुटिलशृङ्गाघातपातेन कश्चि-
द्वनभुवि हरिणोऽपि स्वैरमाहन्तुमैच्छत्[1] ॥२३॥

---

१. C स्वैरमाहर्तुमैच्छत् ।

3187 विकटगुरुविषाणादभ्रभाराण्यवाप्त्रि
प्रसभमभिहतानामुत्तमाङ्गानि पूर्वम् ।
गिरिभुवि हरिणानामाशु पश्चाद्वपूंषि
स्रुतरुधिरलधूनि व्योममार्गान्निपेतुः ॥२४॥

3188 उपगतमवलोक्यावज्ञया सैन्यमुच्चै-
रगणितगुरुभीतिर्मुक्तिसंरम्भमग्रे ।
हरिणपरिवृढोऽस्थादन्यथा सत्त्वभाजः
[1]कथमिव गुरुधैर्यस्योजसास्योपमा स्यात् ॥२५॥

3189 प्रकटविकटशृङ्गैः काननं मन्दराद्रे-
र्दधत इव निवासप्रीतियोगाच्छिरोभिः ।
नभसि पृषतयूथा दूरमुत्प्लुत्य पेतु-
र्दशनखुरविरुग्णालग्ननाराचपुङ्खाः ॥२६॥

3190 व्यपगतघृणमारान्मन्दरस्याङ्कवर्ति
घ्नति सुरगणसैन्ये द्वीपिसिंहादिसत्त्वम् ।
प्रतिककुभमुदस्थुर्मन्युमन्तस्तदानीं
तदनु वरवराहाः प्रत्यनीकायमानाः ॥२७॥

3191 चमरहरिणवृन्दं वालभाराक्षिपातै-
रनुकृतनिजनारीकेशहस्तेक्षणत्विट् ।
क्वचिदपि परिहृत्याधावतां सैनिकानां
हरि-शरभ-वराह-द्वीपि हन्तव्यमासीत् ॥२८॥

3192 सुरभिकुसुमभाजो रूपशोभां दधत्या-
स्तरलहरिणदृष्टेः काननोर्वीरमण्याः ।
सुरत इव मृगव्या-विभ्रमेऽस्योऽर्धचन्द्र-
स्फुटकरजनिपातैः पाटयामास गण्डम् ॥२९॥

---

१. C कथमपि ।

3193 शिखरिभुवि शिखण्डी वल्गुबर्हातिभारा-
दलसितगतिराराद्धन्विनान्वीयमानः ।
त्वरिततरमशक्नोन्न घ्नतो नंष्टुमस्मा-
द्विपदि भवति काचिद्दोषरूपा गुणश्रीः ॥३०॥

3194 इति विहितमृगव्यैर्मुक्तपर्याणपट्टा
ववलुरवनिपीठे सादिभिः कृष्टवल्गाः ।
श्रमजलकणजालाश्लिष्टजाम्बूनदोर्वी-
विधुतघनपरागालिङ्गिताङ्गास्तुरङ्गाः ॥३१॥

3195 रयचतुरतरङ्गक्षोभशीतैर्मरुद्भि-
र्धुतकपिलसटाग्राः सैकते नाकसिन्धोः ।
अधिजलमवतेरुर्मङ्क्तुमुत्प्रोथघोणाः
खुरखुरशिखराग्रक्षुण्णपाठीनचक्राः ॥३२॥

3196 विघटितदलमुद्रान् पङ्कजौघान् विहाय
प्रमदविधुतपक्षास्तोय एव द्विरेफाः ।
अपि मदजलबिन्दून्दूरमन्वीयुरेला
स्तबकसुरभिगन्धीन्मज्जतां वारणानाम् ॥३३॥

3197 सुरसरिति न यावल्लक्ष्यमाणाध्वखेदाः
सरभसमवतेरुर्मज्जनायामरौघाः ।
द्रुतमसिचत तावच्छीकरैरग्रतस्ता-
त्करकलितलवङ्गामोदहृद्यैर्गजेन्द्रः ॥३४॥

3198 द्विरदपतिसहस्रैः स्रोतसोऽन्तर्निमग्न-
क्षितिधरगुरुदेहालक्ष्यवक्त्राग्रहस्तैः ।
त्रिदशसरिदनेकोद्दामगर्भाभिनिर्य-
द्गणपतिरिव दूरात्सैनिकैरालुलोकि ॥३५॥

3199 कृतगुरुमदगण्डाभोगभूषं गजानां
भ्रमरकुलमपोढुः शीकरा हस्तमुक्ताः ।
किमपरमथवा स्यादाश्रितानां जलेभ्यः
सपदि मदभरान्धैर्दूरमारोपितेभ्यः ॥३६॥

3200 प्लुतिसुखमनुभूय प्राज्यसिन्दूररेणु-
च्छुरणकपिशितोर्मेः सिन्धुगर्भाद्गजेन्द्राः ।
क्षितिभृत इव पक्षच्छेदिनो वज्रपाणेः
पुनरभयमवाप्याप्युज्जिहाना विरेजुः ॥३७॥

3201 सलिलगुरुसटाग्रा बिभ्रतो रुग्णमूलाः
खुरशिखरविलग्ना हेमशेवालवल्लीः ।
त्रिदशसरित उच्चैस्तीरमुत्प्रोथघोणाः
श्वसिततरलितोर्मिव्रातमुत्तेरुरश्वाः ॥३८॥

3202 श्रमशिथिलितकण्ठच्युतनिःश्वासवात-
व्यतिकरधुतसेनाधूलिरुद्धान्तरालाः ।
तरलसरलपुच्छं चेरुरश्वाः स्थलीभ्यो
मरकतमणिसूचीकोमलाञ्शष्पखण्डान् ॥३९॥

3203 विदधति गुरुपक्षोत्सेकमज्ञा जलानां
स्फुटमिह मलिनानामाशये वर्तमानाः ।
यदमरगणसेनारेणुपङ्काविलासु
प्रतिककुभममाद्यन्निम्नगास्वेव मत्स्याः ॥४०॥

3204 क्षितिधरपतिभूमिं दूरमुल्लङ्घ्य वेगा-
दथ हरिकरिपत्तिस्यन्दनं कल्पितं सत् ।
द्रुततरमुडुवीथीं मार्गमभ्याहताभ्रं
सरभसमुदपप्तद्व्याप्तविश्वं स्मरारेः ॥४१॥

3205 प्रतिककुभमुदस्थात्सामि यत्सैनिकाना-
मगमदथ समाप्तिं तेन सर्वं विहायः।
अपरमपि यदर्धं दूरमुत्पित्सु तस्था-
वभवदवनिपृष्ठं तेन निष्ठाप्रतिष्ठम् ॥४२॥

3206 दिशि दिशि परिशुष्यद्दानतोयस्रुतीनां
त्रिदशगजघटानां दूरमुत्पेतुषीणाम्।
दिनकरकरतापोपप्लवादाकुलाना-
मतिनिकटतयोच्चैः पुस्फुटुः कर्णशङ्खाः ॥४३॥

3207 पुनरुपगतपक्षोड्डीननिःशेषशैल-
स्फुटशिखरशिखाम्भः स्यन्दसन्देहमुग्धैः।
दिशि दिशि घनवृन्दैः पीयते स्म द्विपानाम्
विकटकरटभित्ति भ्रष्टमारान्मदाम्भः ॥४४॥

3208 अतनुसलिलगर्भाः कज्जलश्यामभासो
नभसि जलदलेखा वेल्लयमाना मरुद्भिः।
क्षणवलनविलोला वारणानां नवान्दू-
निबिडनिगडलीलां पादलग्ना वितेनुः ॥४५॥

3209 अनुकृतगिरिशृङ्गाभोगगण्डस्थलाग्र-
स्खलितविकटभास्वत्तारनक्षत्रमाला।
स्रुतमदजललेखा बिम्बिता वारणानां
श्रियमतनुत तारापङ्क्तिरारात्स्फुरन्ती ॥४६॥

3210 श्रवणशिखरभूषाचामरान्मा स्म धाक्षी-
दिदमविदितविद्युद्दामसप्तार्चिषारात्।
जलदकुलमितींवानुद्यतोच्चैः पुरस्ता-
द्दिशि दिशि गजताभिश्चण्डशूत्कारवातैः ॥४७॥

3211 छुरितसुरपथासूत्तुङ्गकुम्भस्थलीषु
श्रवणधुतिहताभिश्चीनपिष्टच्छटाभिः ।
क्षणघटनविलोला नाकनक्षत्रमालाः
श्रियमननुतमभ्यस्तेनिरे वारणानाम् ॥४८॥

3212 विकटकनककक्ष्यादामसौदामिनीकं
द्विरदकुलमभासीदन्यदासीनमुर्व्याम् ।
सुरगणपतिसेनारुद्धनाकावकाश-
व्यतिकरगुरुखेदस्रस्तमेघौघकल्पम् ॥४९॥

3213 अरुणमणिकिरीटच्छायया लङ्घ्यमाना
गलितमदजलार्द्रे बिम्बिता गण्डभागे ।
शिशिरकिरणलेखा लक्ष्यते स्म द्विपानां
नभसि विकटकुम्भस्रस्तहेमाङ्कुशश्रीः ॥५०॥

3214 अकलितगुरुविद्युद्दामभिः श्यामिताशै-
रसलिलगुरुगर्भैरुन्नमद्भिः सलीलम् ।
द्विरदपतिभिरुच्चैस्तस्तरे नाकमार्गः
प्रतिदिशमवरुग्णालोकमक्षुण्णमेघैः ॥५१॥

3215 ग्लपितपवनवेगं व्योम्नि पश्चार्धभाग-
स्थिरखुरशिखराग्रैरप्यनालम्बमेव ।
गिरितटविकटोरः प्रेरितासन्नतारं
चटुलचरणकोटिन्यासमश्वैः प्रसस्रे ॥५२॥

3216 नभसि तुरगसैन्यं दूरमुत्कर्णघोण-
स्फुरितमुखमनीचैरुत्प्लुतीराददधानम् ।
हरिणकुलमिवासीद्विस्फुरच्चित्ररत्न-
व्यतिकरशबलाभिर्भ्राजमानं गुडाभिः ॥५३॥

3217 जवनपवनधूतैर्वेल्लितविस्फुरद्भिः
नभसि विबभुरश्वा लाक्षिकैश्चामरौघैः ।
विकटखुरशिखाग्रक्षोभभिन्नाग्रगर्भ-
स्खलितचटुलशम्पाश्लिष्टरूपा इवोच्चैः ॥५४॥

3218 रविकरपरिमर्शाद्विस्फुरद्भिस्तदानी-
मपगतघनपङ्कं नाकमीलीसहस्रैः ।
सरभसपरिवर्तालक्ष्यपाण्डूदरार्धैः
सर इव शफरौघैर्घूर्णमानैरभासीत् ॥५५॥

3219 विकटशिखरलग्ना केतुदण्डावलीषु
स्फुरितविविधरत्नच्छायकल्माषभासः ।
नवजलधरखण्डाः केकिपिच्छातपत्र-
श्रियमदधुरधस्तादुगच्छतां सैनिकानाम् ॥५६॥

3220 स्फुरितमणिकिरीट-ग्रन्थिगर्भान्तराल-
प्रतिमितमहिमांशोर्मण्डलं व्योम्नि तेषाम् ।
प्रतिफलदमलांशुव्रातमाशामुखेषु
स्फुटकनकशिरस्त्राभिन्नरूपं तदासीत् ॥५७॥

3221 रथतुरगखुराग्रक्षुद्यमानात्पुरस्ता-
त्प्रतिपदमुडुचक्रादुत्थिता धूलिलेखा ।
श्रियमतनुत मुक्तावालुकायास्तदानीं
गगनमकरसद्मन्यश्नुवाना दिगन्तान् ॥५८॥

3222 स्फुरदतनुतडित्का वेल्लयमाना मरुद्भि-
र्दधुरविरलनीलश्यामभासोऽभ्रलेखाः ।
कृतकवलनलीलारम्भलग्नौर्ववह्नि-
स्फुटविकटतरार्चिः सिन्धुभङ्गीविलासम् ॥५९॥

3223 सपरुषरसितस्याम्भोधरस्योपरिष्टा-
त्सरुषमभिपतन्तं सिंहमालोक्य चण्ड्याः ।
जगति विफलमेव प्रज्ञया शून्यमुच्चैः
स्फुटममनुत तेजस्तादृशां सैनिकौघः ॥६०॥

3224 प्रमथपतिरथासीद्दानतोयार्द्रगण्ड-
प्रतिमितमणिचित्रच्छायवैकुण्ठशार्ङ्गः ।
विकटशिखरभागालक्ष्यवृत्रारिचाप-
क्षितिधरपतिलीलां बिभ्रदभ्रङ्कषश्रीः ॥६१॥

3225 श्रियमभृत पुरस्तादिन्दुमौलेस्तदानीं
गणपतिरतिवेगात् प्रस्थितो नाकमार्गम् ।
दधदपरमिवेन्दोर्मार्गमुष्णीषभाजः
परशुमुखममन्दोल्लासनाशारिताभ्रम् ॥६२॥

3226 द्विरदमदनदीभिः सैन्यमेतत्पुरस्ता-
त्कलुषयति पुरा मे चन्द्रिकागौरमम्भः ।
सचकितमिति मार्गाद्भीतयेवापसस्रे
खगपतिगुरुवेगव्यस्तया नाकनद्या ॥६३॥

3227 स्फुटमिह विमलानां स्वच्छता श्लाघ्यरूपा
विसदृशमुपधानं तत्र दोषाय नूनम् ।
प्रतिमितममरौघा मेनिरे यन्निरीक्ष्य
क्षितितलमपि शीताभीशुबिम्बे कलङ्कम् ॥६४॥

3228 इत्थं सेना स्मरारेर्जलधरपदवीं दूरमुल्लङ्घ्य वेगा-
दासीना रत्नसानोस्तटभुवि विविधव्यूहविस्तारभाजः ।
तस्थुर्गव्यूतिमात्रं धृतगुरुसमरारम्भदैत्येन्द्रसेना-
निर्याणापेक्षमुच्चैर्दिशि दिशि विकसच्चित्रवादित्रघोषाः ॥६५॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये सैन्यप्रस्थानं नामैकचत्वारिंशः सर्गः ।

## द्वाचत्वारिंशः सर्गः

3229 ज्वलिता भृशं तदभियोगरुषा

घिविधायुधाः दितिसुताधिपतेः ।

प्रहतानकाः समरलालसया

सह सैनिकैर्जघटिरे पृतनाः ॥१॥

3230 शितवर्त्मभिः करतलप्रहितै-

र्युधि शुष्मिणां विदलिताम्नभसः ।

मदतृष्णया करिकटेष्वलयः

पतिता बभुः प्रचुरचूर्णनिभाः ॥२॥

3231 क्षयकारिणः सपदि पीतविषा

भुजगश्रियं प्रतिभया दधतः ।

विबभुस्तरामसिचयाः समरे

हरविभ्रमा रुचिरचन्द्ररुचः ॥३॥

3232 भुजशालिनां करतलप्रहितै-

र्भ्रमणाकुलैररिभिरभ्यहितम् ।

अनुचक्रिरे समररत्ननिधेः

सलिलभ्रमाः सपदि [1]मण्डलिभिः ॥४॥

3233 कृतमूर्च्छनं प्रहरता द्विषता

करशीकरै रणगतः शिशिरैः ।

समशिश्वसत् करिपतिः सुभटं

महतां स्थितिः परहितप्रवणा ॥५॥

---

१. A मण्डलिना ।

3234 रुधिरारुणैर्निशितखड्गहता
नवमौक्तिकैर्द्विरदकुम्भतटाः ।
युधि दाडिमैः सदृशविभ्रमतां
स्फुटितैर्दधुः प्रकटबीजशतैः ॥६॥

3235 भटकामिनः प्रतिवरूथवर्ती
रभसात् घ्नतः समरवासगृहे ।
प्रतिगुम्फिताः शितिसरोजदलै-
र्गलिता बभुः स्रज इवासिलताः ॥७॥

3236 शुशुभेतरां मणिशिरस्त्रभृता
भुजशालिना धृतसमुन्नतिना ।
सदृशात्मतामुदयसानुमतः
परिबिभ्रता शिखरवर्तिरवेः ॥८॥

3237 उदरश्रितो विकटकुम्भभुवो
नवमौक्तिकान्नभसयानुसृतैः ।
सदृशश्रियः शुचिभिरंशुचयैः
श्रुतिचामराः शुशुभिरे करिणाम् ॥९॥

3238 प्रतिहारिभिः करिकरैरसकृत्
परिपिण्डतैः समरभूमिराभात् ।
लिपिसंहतेः सुभटनामजुषः
प्रणवैरिव प्रथममालिखितैः ॥१०॥

3239 युधि धावतः प्रतिगजाभिमुखं
पुनरप्यधाद्गजपतेः सरुषः ।
दलिताश्रयः सपदि केतुपटः
पतितो मुखे पृथुमुखच्छदताम् ॥११॥

3240 करिमौक्तिकैर्विगलितैः शुचिभिः
सुभटाश्रयाश्चमरतन्तुशतैः ।
वरणस्रजो ग्रथयितुं रणभूः
सुरयोषितां द्रुतमिवैच्छदसौ ॥१२॥

3241 सुरकुञ्जराः क्षितितलास्खलितैः
प्रतिमाश्रयान्विदधुरूर्ध्वगतैः[1] ।
कटकान् करैः स्फुटचपालरुचः
समराध्वरे विकटयूपगतैः[2] ॥१३॥

3242 स्फुरदुच्चकैर्विकचकुन्दरुचि
श्रवणाश्रयं [3]गजपतेर्जलजम् ।
शशिमण्डलं तरलमन्वकरोत्
प्रकटास्पदं गिरिगुहानिकटे ॥१४॥

3243 पतितोद्धृतैः श्रवणशङ्खशतैः
समराङ्गणे शुशुभिरे करिणाम् ।
सदृशाः कराः सरलतां दधतः
स्फुटमौक्तिकैर्विकटवंशशतैः[4] ॥१५॥

3244 युधि घूर्णितं सुभटमीक्ष्य पुरो
दधती वपुः पुलककण्टकितम् ।
स्मरगौरवात् सुरवधूरभवत्
भृशदुर्वहा निजविमानभुवः ॥१६॥

3245 क्षितिमण्डले [5]निमितजानुयुगो
गुरुमत्सरस्त्रिकसमुन्नतिमान् ।
स्थगितेक्षणो ध्वजपटेन मुहुः
भटविग्रहे परिणनाम करी ॥१७॥

---

१. A, B गतान् । २. B, C शतैः । ३. C गजपतिः ।
४. C गतैः । ५. A निहित for निमित ।

3246 रणभूरसौ दलितवर्तनया
मणिघण्टया हतकरिच्युतया ।
समरश्रियो व्यरुचदाश्रितया
सदृशीं श्रियं कमलकर्णिकया ॥१८॥

3247 कृतमूर्च्छनं व्यनुसृता सुभटं
युधि जीवितो व्यपगता च ततः ।
करिमौक्तिकैर्दशनपङ्क्तिनिभै-
र्जहसे भुवा स्फुटमिव द्युवधूः ॥१९॥

3248 श्रियमुच्चकैर्दधदलङ्घ्यतमां
निजतेजसा क्षपितशत्रुतमाः ।
अवगुण्ठितः समरधूलिकणैः
सुभटोऽस्फुरद्विशदमेव तदा ॥२०॥

3249 रचितस्थितेः प्रविकटांसतटे
श्रवणानिलैः परिवृढस्य पुरः ।
वसुधारजः प्रबलभक्तिमना
व्यकिरत्तरां रभसयेव करी ॥२१॥

3250 स्फुरिता बभौ गगननीलरुचिः
सुभटाश्रया विमलखड्गलता ।
समराम्बुधेर्नवतमालरुचा
तटलेखया सदृशतां दधती ॥२२॥

3251 गजसंहतेर्दलयतो दशनात्
प्रचुरं रजः शशिमरीचिसितम् ।
द्रुतमुत्थितं यश इवाविरलं
शबला दिशो व्यधित शुष्मवतः ॥२३॥

3252 मणिरञ्जिता शशिकलेव शनैः
कुटिलोत्थिता समरसिन्धुपतेः ।
श्रियमासदत् भटकराग्रगता
करवालिका रुधिरताम्ररुचिः ॥२४॥

3253 रिपुदन्तिनां पृथुविषाणगता
भुजशालिनो दलयतः प्रतिमाः ।
घनमेचकं विषमिवोदभवत्
प्रचुरं रजः प्रधनरत्ननिधेः ॥२५॥

3254 विदधज्जवात् कुलिशमुष्टिहतं
करिणो रणे रदनदण्डयुगम् ।
सुभटोऽकिरोन्नवरमप्रतिमं
समभिष्टुतः स्वमपि योधजनैः ॥२६॥

3255 पुलकं दधौ सघनघर्मजला
धृतपवेथुर्मुहुरजृम्भत च ।
भटमीक्ष्य खे नहि तदस्ति न यत्
विदधेऽप्सराः स्मरमयं ललितम् ॥२७॥

3256 गलिताः क्षितौ शरशिखादलिताः
क्षतजोक्षिता द्विरदवालधयः ।
नवलाक्षिकैः शुशुभिरे सदृशा
युधि चामरैर्दिनकराङ्गभुवः ॥२८॥

3257 रचितास्पदा निहतसादितया
तुरगासने सपदि शून्यतले ।
दधतो मुदं रुधिरपानकृतां
युधि वभ्रमुर्विकृतभूतगणाः ॥२९॥

3258 भुजशालिना स्फुरदरि प्रघ्ने
स्थगितान्तरं शुचिमरीचिचयैः ।
समरश्रियः सरसचाटुधिया
मणिदर्पणं विधृतमन्वकरोत् ॥३०॥

3259 युधि कोटवीरभिविलोक्य तदा
मुदितात्मनः प्रकृतनृत्तविधाः ।
दलिताश्रयैर्धवलकेतुपटै-
स्तरितुं चमूद्रुतमिवैच्छदसौ ॥३१॥

3260 परिघाहतात् पृथुविषाणमुखात्
प्रतिमा बभौ निपतिता करिणः ।
शरधिश्रियं युधि परिभ्रमतः
समवर्तिनो निजरुचिं दधती ॥३२॥

3261 क्षतपुष्करैरशिवया शिवया
स तदानकैर्निपतितैरवनौ ।
रणराक्षसो ग्रसितुमाशु चमू-
र्वंहुभिर्मुखैः स्थित इव व्यरुचत् ॥३३॥

3262 असिभोगिभिः स्फुरितरत्नकणैः
कृतगुप्तयः ससलिलाभ्रनिभैः ।
समरक्षितौ स्फुरितभद्रघटाः
श्रियमासदन् सुभटसन्निधयः ॥३४॥

3263 समणित्विषो विकटचापलता
भटनायकः प्रसभकृष्टिनताः ।
गृहभृत् कला धवलपक्ष इव
व्यनयत् क्रमात् अतनुमण्डलताम् ॥३५॥

3264 घनमुत्थितं युधि मिथोऽभिहतैः
श्रियमाधय सुभटखड्गरजः ।
सुरयोषितां प्रकृतसंवनने
नवमञ्जनं द्रुतमिवाचरितम् ॥३६॥

3265 युधि शङ्कुभिर्भटकरप्रहितैः
दधुरुन्नताः स्फुटशिखण्डभरैः ।
गिरिभिः क्षणं सदृशतां करिणः
प्रचलाकिभिः शिरसि बद्धपदैः ॥३७॥

3266 समणित्विषा घटितमीलिकया
पतितं भटात्समिति चक्रमधः ।
कुटिलश्रिया शशभृतः कलया
रविमण्डलं सहितमन्वकरोत् ॥३८॥

3267 भृशविक्लवास्त्रिदशवैरिवधू-
स्त्रिदिवौकसां विदधता ववृधे ।
अचलाधिपं दलयतेव जवात्
शरजन्मना युधि रवेण तदा ॥३९॥

3268 विकटोर्मयः समरसिन्धुपतेः
समवर्तिनः स्फुटकराङ्गुलयः ।
श्रियमासदन् विकटकुन्तलता
भुजशालिभिः सरभसं भ्रमिताः ॥४०॥

3269 नवमौक्तिकैः करिशिरोघटितै-
र्गगनच्छविः सुभटखड्गलता ।
युधि केशिनो दशनरत्नकणैः
शबलीकृता हरिभुजेव बभौ ॥४१॥

3270 द्विरदः क्षणादसिविलूनतलात्
प्रतिहारिणः करिकरानवनौ ।
भयपुञ्जितान् सपदि पत्त्रिपति-
र्भुजगानिव व्यदलयत् समरे ॥४२॥

3271 भ्रमयन् जवादतनुकुन्तलतां
निजतेजसास्फुटमधःस्थमवैत् ।
दशनोत्प्लुतः प्रतिगजांसगतं
सुभटं भटः प्रहितहेतिशतम् ॥४३॥

3272 करिणि स्थितः प्रचुरभूतिसिते
स्फटिकाचले द्रविणनाथ इव ।
अमनुष्यगं तदपि धर्ममगात्
सुभटो परः क्षपितशत्रुगदः ॥४४॥

3273 मणिवर्मसु प्रघनवर्त्मगता
विबभुर्भटाः स्फुरितचक्रचयाः ।
विमलात्मभिः सदृशतां दधतः
सलिलाशयैः प्रतिमितोष्णकरैः ॥४५॥

3274 गलितं तथा रदनिनां समरे
प्लुतदिङ्मुखैर्बहलदानजलैः ।
स्नुतनिर्झरानभिविशङ्क्य गिरीन्
नभसो यथा घटितमम्बुधरैः ॥४६॥

3275 करिणां मिथो दशनघट्टनया
विषमार्चिषा सपदि निष्पतता ।
समराजिरे ज्वलितकुन्तलतः
क्षितिभृद् बभौ प्रकटदाव इव ॥४७॥

3276 द्रुतपातिनः सजलमेघरुचो
युधि वाहिताः प्रतिभटक्षतये ।
निविडौजसः शुशुभिरे तुरगाः
शितिवर्त्मभिः सदृशतां दधतः ॥४८॥

3277 भुजशालिनो जिगमिषोस्त्रिदिवं
समरश्रिया प्रकृतमङ्गलया ।
कलशैरिव प्रतिदिशं निहितै-
र्भटमस्तकैः क्षितिरभात् पतितैः ॥४९॥

3278 रचितास्पदा दधति वारिमुचा
समदेहतां गजपतौ समदे ।
श्रियमासदत्तडिदिवारुणिता
गलतासृजा समिति खड्गलता ॥५०॥

3279 इत्थं विजृम्भितरुषः कृतरत्नसानु-
कम्पाः परस्परजयावहितैर्मनोभिः ।
गीर्वाणदैत्यपृतना बहुधा तदानीं
सद्वन्द्वसङ्गररसप्रवणा बभूवुः ॥५१॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये समरोद्धाटवर्णनम् नाम द्वाचत्वारिंशत् सर्गः ।

---

## त्रिचत्वारिंशः सर्गः

# सुमालिनो युद्धवर्णनम्

3280 [1]यस्यामरवधूर्दध्रे मदनानृजुहावताम् ।
सुमाली सोऽथ सङ्ग्रामे रिपुसेनां जुहाव ताम् ॥१॥

3281 सङ्ग्रामकाननोत्तालतालनिस्त्रिंशमण्डले ।
विद्याधरगणे [2]दर्पादवसानं सुरद्विषाम् ॥२॥

3282 *ततोऽततीतितोत्तातीनाना नाना न नूनना ।
स सुसांसोऽसुसासासि [3]रिरारोरारिरैरिरत् ॥३॥

एकाक्षरपादः युग्मम्

3283 [4]सारामर्षि-निकृत्तारिकण्ठरक्तह्रदाकुला ।
समन्तपञ्चकोर्वीव बभूव रणपद्धतिः ॥४॥

3284 [5]नाधानिषत तेनाजौ के तुच्छत्रपता [6]कया ।
तत्सेनया [7]दधे भग्नकेतुच्छत्रपताकया ॥५॥

---

१. A, C add ॐ in the beginning । २. A दर्पादवसारे । C दर्पादवसारम् ।

३. A रिरारोरारि ।

*ततः अतति ईतितोत्ता अतीनाना नाना न नूनना ।
स सुसांसः असुसासासिः इरारोरारिः ऐरिरत् ॥ इति छेदः ।

ईतितोत्ता अतीनाना नूनना न सुसांसः असुसासासिः इरारोरारिः सः सुमाली ततः विद्याधरगणे अतति सति ऐरिरत् इत्यन्वयः ।

४. A, B सारामर्द्विनिकृत्तारि । ५. A, B नाद्यानिषत ।

६. C omits कया । ७. C omits दधे ।

## नन्दिनो युद्धवर्णनम्

3285 सोऽथ नन्दी दधच्चक्रं रणश्रीनाभिमण्डलम् ।
एकोऽप्यनेक इत्याजौ विचरन्नैक्ष्यतारिभिः ॥६॥

3286 भेदैनैभं रणे तस्मिन्नवलाय कटं कया ।
नारोचि सेनया तस्य नवसायकटङ्कया ॥७॥

3287 दैत्या दैत्या इवोद्दामदोर्दण्डबलशालिनः[1] ।
सुराः सुरा इवान्योन्यं व्यतिजघ्नुर्महाहवे ॥८॥

3288 [2]विषाणमुसलैर्नूनमभिनन्दन्तिनो रसाम्[3] ।
[4]व्यूढत्वं के [5]स्म दैत्यानां अभिनन् दन्तिनोरसाम् ॥९॥

3289 प्रत्यज्ञायि प्रसरता [6]वीरेणाजावदन्तता ।
नैर्गुण्यमाशु भजतः पिबेरिव विषाणिनः[7] ॥१०॥

3290 रणे शिवाभिरमनागमितं[8] चकले वरम् ।
अदृश्यतास्थिशेषत्वं गमितं[9] च कलेवरम् ॥११॥

3291 वभुः श्रीवृक्षखर्जूरीसंनिवेशमनोरमाः ।
तुरगाः काननच्छायाः पर्याप्तवटवर्णकाः ॥१२॥

---

१. A दोर्दण्डबलशायिनः ।
२. B reads विषाणमुसलैः ।
३. रमाम् for रसाम् ।
४. C व्यूढत्वं कैः ।
५. A केऽस्य ।
६. C धीरेण for वीरेण ।
७. C विपाणिता ।
८. A नागमिते च कलेवरम् ।
९. C गमिते च कलेवरम् ।

3292 अभावि रभसान्नाकस्त्रिया मानवतां तया ॥
रणधूल्या दधे तस्यास्त्रियामा नवतान्तया ॥१३॥

## पुष्पदन्तस्य युद्धवर्णनम्

3293 पुष्पदन्तोऽपरत्राथ भ्रमन्दिङ्नागविभ्रमः ।
दैत्यान् सीमन्तयामास सागरोर्मीनिवोद्धतः ॥१४॥

3294 युधि निघ्नञ्जयावाप्तिकाङ्क्षिणोऽति स्म याचितः ।
अभयं[1] तैरसौ सेनां काङ्क्षिणोति स्म याचितः ॥१५॥

3295 स प्रज्ञाततमोऽप्येकस्तदानाहतलक्षणः ।
भीष्मोऽप्यशान्तनवतां विदधार नदन् रणे[2] ॥१६॥

3296 सोऽभूत्स्वनश्रियाब्दोत्क[3]मयूरागमकृत्तया ।
इच्छयास्य भटा योद्धुमयू रागमकृत्तथा ॥१७॥

3297 प्रभञ्जनोऽरिसेनासु तदासावच्युतो रणे ।
भास्वान्वपुषि चाभासीतिपिंशन्नमरविद्विषाम्[4] ॥१८॥

3298 *सालांसः सलिलोल्लोललोलासिः सूल्लसोंसलः ।
लीलालसं ललासासौ सासोऽसल्लालसासुलूः ॥१९॥ द्व्यक्षरः

3299 य एकस्तरसा दैत्यान्वंशानिव सुपर्वणः ।
क्ष्माभृत्कटकसञ्चारी बभञ्ज सुरकुञ्जरः ॥२०॥

---

१. A अभयं ते । २. A, B नदद्रणे ।
३. A श्रियाब्दोऽर्क । ४. B निघ्नन्नमरविद्विषाम् ।

*सालांसः सलिलोल्लोललोलासिः सूल्लसः अंसलः ।
लीलालसं ललास असौ सासः असल्लालसासुलूः ॥ इति च्छेदः । १९

असौ सालांसः सलिलोल्लोललोलासिः सूल्लसः अंसलः असौ सासः असल्लालसासुलूः लीलालसं ललास इत्यन्वयः ।

3300 सादितानवती सेना संयुगं रभसादिता ।
सादिता युध्यमानेन तेनारेः सहसा दिता ॥२१॥　　संदष्टयमकम्

3301 घनसंतमसच्छाया नीलवज्रवरूथिनी ।
[1]तीक्ष्णवर्त्मभिराकीर्णा पातालोर्वीव भोगिभिः ॥२२॥

3302 *साराभाशु शुभारासा सारताममतारसा ।
यान्यानघघनन्याया सा मतातततामसा ॥२३॥
अनुलोमप्रतिलोमपादः युगलकम्

3303 स कार्तान्तिकसिद्धान्तप्रक्रियामिव तां जवात् ।
तदा विलुप्तज्याकेन्द्रामवधीदवधानतः[2] ॥२४॥

3304 बभूवुर्नन्दिनो रोषादसृगालोहिता दृशः ।
न यस्य प्रतिभात्यारादसृगालो हि तादृशः ॥२५॥

3305 स तस्य वल्गतो देहादसिनापातयच्छिरः ।
दिनात्यय इवास्ताद्रेः स्फुरदर्कस्य मण्डलम् ॥२६॥

3306 वलं विस्माथि शैलादेरुरुधुर्यतयोऽभयम् ।
तेनास्त दिव्याः खं द्रष्टुं रुरुधुर्यतयोऽभयम् ॥२७॥

3307 अभ्रंकषत्वं दधतः कटकच्छाययान्विताः ।
विबभुः सुभटास्तस्य सेनोर्वीकुलपर्वताः ॥२८॥

3308 दिक्चक्रं प्रणताभीतिदानवाचा रुरुत्सताम् ।
कीर्तिस्तेषामगाद्भग्नदानवा चारुरुत्सताम् ॥२९॥

---

१. B आसीदितिशेषः (footnotes) ।
*साराभा आशु शुभारासा सारता ममता रसा ।
या अन्य-अनघ-घनन्याया सा मता आतततामसा ॥ इति च्छेदः । २३
या अन्य-अनघ-घनन्याया आतततामसा सा साराभा शुभारासा सारता-ममता-रसा मता-इत्यन्वयः ।

२. C मवधानतः for दवधानतः ।

3309 आस्फाल्य निक्वणन्मौर्वीतन्त्रीकाश्चापवल्लकीः ।
गन्धर्वपृतना दैत्यैः सार्धं रणरलीं व्यधात् ॥३०॥

3310 तेजोऽहृत सुरारीणामनुज्वालाभिधावताम् ।
स्थितिर्गत्या रणे येषामनुज्वालाभि धावताम् ॥३१॥

3311 स्फुटार्धचन्द्रमुद्दामवाहिनीपातसंकुलम् ।
महेश्वरशिरश्छायं श्वसन्नागं रणाङ्गनम् ॥३२॥

## कुमारयुद्धवर्णनम्

3312 *विवेश विश्वशावेशः शशीव शिवशैशवः ।
[1]शैवः शवांशाशावेशिशिवावंशं वशी विशाम् ॥३३॥ द्व्यक्षरः । युग्मम्

3313 दधत्कराङ्गुलिव्रातभोगीन्द्रकृतवेष्टनाम् ।
स शक्तिमसुराम्भोधिमाथिमन्दरविभ्रमाम् ॥३४॥

3314 सङ्ग्राममभूमिं करुणामदधत्तामसावृतः[2] ।
यशो निघ्नन्रिपुचमूमदधत्तामसावृतः[3] ॥३५॥

3315 तमभीयुस्तनुच्छायतिमिरावृतदिङ्मुखाः ।
सतारका वरूथिन्यः क्षयकालनिशा इव ॥३६॥

3316 स व्यधादक्षताशस्ताः सञ्जयो धामहासिना ।
सव्यधा दक्षताशस्ताः सञ्जयोधा महासिना ॥३७॥

समुद्गयमककाञ्चीगोमूत्रिकमुरजजालबन्धाः

---

*विवेश विश्वशाव ईशः शशीव शिवशैशवः ।

शैवः शव + अंश + आशा + वेशि शिवावंशं-वशी विशाम् ॥ इति च्छेदः । ३३ विश्वशाव ईशः शव + अंश + आशा + वेशि शिवावंशं विशां वशी शिवशैशवः शैवः शशीव स्फुटार्धचन्द्रं उद्दामवाहिनीपातसङ्कुलं महेश्वरशिरश्छायं श्वसन्नागं रणाङ्गनं विवेश इत्यन्वयः ।

१. A, B, C शैविः शवांशवावेशिशिवावेशवशीविशाम् ।
२. B अधारयत् (footnotes) । ३. B घेट् पाने (footnotes) ।

## नारकात्वयुद्धवर्णनम्

3317 कृतान्तनगरीसालवलयं चक्रितं धनुः ।
दधत्तेनाथ युयुधे तारकाक्षो महाहवे ॥३८॥

3318 [1]शुभदाता तदा दैत्यानवस्यन्दनवे गतः ।
तत्सङ्ग्रामाङ्गनं रेजे नवस्यन्दनवेगतः ॥३९॥

3319 तत्सैनिकान् समीके स चमूरचितसच्छ्रियः ।
क्षेप्तुं जगत्रयपायसमीरण इवाचलान् ॥४०॥

3320 *शशिकेशांशकोऽशोकक शिकीके शिशुः शुकी ।
शं शशाकैकशोऽशूककेकीशाकाशकौशिकः[2] ॥४१॥

द्व्यक्षरः । युगलकम्

3321 लक्ष्मीः षट्चरणच्छायाशोभीन्यसुरसैनिकैः ।
ददृशे तस्य वक्त्राणि पद्मानीवाधितस्थुषी ॥४२॥

3322 मन्वानास्तं शरैः संख्ये ते पुरस्ताद्विपं जितम् ।
तेजोऽर्कमिव बिभ्राणं तेपुरस्ताद्विं पुञ्जितम् ॥४३॥

3323 सुदर्शनश्रीर्द्विषतां स चक्रिभुजमाश्रितः[3] ।
शिरांसि पीवरच्छेदस्कन्धचक्राणि शातयन् ॥४४॥

---

१. C शुभदण्डस्तदा दैत्या......।

*शशिकेशांशकः अशोककौशिकीके शिशुः शुकी ।
शं शशाक एकशः अशूककेकीशाकाशकौशिकः ।। इति च्छेदः । ४१

चमूरचितसच्छ्रियः जगत्त्रयापायसमीरणः शशिकेशांशकः शिशुः अशोककौशिकीके शुकी अशूककेकीशाकाशकौशिकः सः अचलान् इव सैनिकान् समीके एकशः क्षेप्तुं शं शशाक इत्यन्वयः ।

२. C कौशिकान् for कौशिकः ।

३. C भुजमाश्रितम् for भुजमाश्रितः ।

3324 *शूरीशशिशुराशाश्रीरश्रीरोरांशुराररौ[1] ।
[2]शशीराशी शरैः शारा रेशिशीररिशः शशन् ॥४५॥

द्व्यक्षरः । युगलकम्

3325 उपसर्गा इव गताः क्रियायोगेन शून्यताम् ।
आसंस्तस्य हता बाणैरप्राप्तगतिसंज्ञकाः ॥४६॥

3326 स्पृहां [3]केनाकरोत्तस्मै सज्जातीयाय सारवान् ।
तच्चमूश्च द्विपः संख्ये सज्जातीयाय[4] सा रवान् ॥४७॥

3327 [5]तमभ्यैत् केतुमालीति नवाञ्जनमलीमसैः ।
अन्वीयमानो दितिजैः प्रावृट्काल इवाम्बुदैः ॥४८॥

3328 क्षुण्णं तेन समिद्वर्त्म तदीये दानवर्तिभिः ।
व्यरोचि च गजैः संख्ये तदीये दानवर्तिभिः ॥४९॥

3329 तदासौ वीरकोपात्तशुभलक्ष्मीपरिग्रहः ।
षड्जन्यासतया विभ्रन्मुखानि गयमभ्ययात् ॥५०॥

3330 विदधे निघ्नता तेन तमस्तारातिनादया ।
तत्सेनया शरैश्चक्रे तमस्तारातिनादया ॥५१॥

3331 [6]उदसाहि स संहार सहस्रकरभास्वरः ।
युयुत्सासाहसोत्साहशालिभिः सहसासुरैः ॥५२॥

---

*शूरीशशिशुः आशाश्रीः अश्रीरोरांशुः आररौ ।
शशीराशी शरैः शारा रेशिशीः अरिशः शशन् ।। इति च्छेदः । ४५
शूरीराशिशुः आशाश्रीः ( आशा नाम श्रीः ) अश्रीरोरांशुः शशीराशी शरैः शारा रेशिशीः अरिशः शशन् आररौ इत्यन्वयः ।

१. B जग्राह (footnotes) ।
२. C शशीशश्रीशरैःशांरारशिशीरशिशः शशन् । ३. A केनाकरोत्तस्मै ।
४. C सञ्जातीय for सज्जातीया । ५. C तमन्यैः for तमभ्यैत् ।
६. B, C तदसाहि for उदसाहि (सोढः) ।

3332 *केकीरकोऽकुकाराकः कारकाकारकारिरुक् ।
कैराकेकरकैराकोररोकैरुरुकोरुकैः ॥५३॥ द्व्यक्षरः । युगलकम्

3333 तारकान्तस्थितिस्पष्टदृष्ट[1]दृष्टतरौजसा ।
स शक्त्या दीप्रया [2]हारलतयेव श्रियं दधौ ॥५४॥

3334 चेतसा वद्धरोषेण मानिनागगनानिमा ।
ततो रणभुवं चण्डी तामिता ममतामिता ॥५५॥ युक्पादप्रतिलोमः

3335 तन्निकृत्तविपर्यासनिविष्टग्रीवतां गतः ।
अदृष्टचरमाजौ स्वं भटः पृष्ठमिवैक्षत ॥५६॥

3336 नाभाच्छ्रुतिरिवाहीना सदोंकारतया न या ।
अगाहि भर्तुः सङ्ग्रामसदोंकारतयानया ॥५७॥

3337 सप्रमापणनिष्णातैरशून्या भटमण्डलैः ।
निषद्येव तदा मृत्योः स्फुटदंष्ट्रा[3] चकासती ॥५८॥

3338 *सारतारहिताध्यासा सा ध्याता क्षतसाध्वसा ।
साध्वसाधर्म्यधीरासा साराधीतिरता रसा ॥५९॥

सप्तदशाक्षरं पद्यम्

---

*केकीरकः अकुकाराकः कारकाकारक + अरिरुक् ।
कैः आकेकरकैः आकोररोकैः उरुकोरुकैः ॥ इति च्छेदः । ५३

संहारसहस्रकरभास्वरः केकीरकः अकुकाराकः करकाकारकः अरिरुक् सः गुहः आकोकरकैः अरोकैः उरुकोरुकैः युयुत्सासाहसोत्साहशालिभिः आकोः कैः असुरैः सह उदसाहि ?

१. C दृष्टतदोजसा । २. C तारतलयेव ।

३. B दंष्ट्रा रथ्यपि ।

*सारतारहिताध्यासा सा ध्याता क्षतसाध्वसा ।
साध्वसाधर्म्यधीरासा साराधीतिरता रसा ॥ इति च्छेदः । ६१

वैरिरमणीकुचमण्डलैः साधं अवारवाणतां दधना सदृशात्मनः दैत्यानवेक्ष्य सारतारहिताध्यासा ध्याता क्षतसाध्वसा साध्वसाधर्म्यधीरासा साराधीतिरता रसा उत्कृष्टकर्णान्ता सारित्रासकृत् रणसिन्धुं उत्तितीर्षतां सुमनसां नौरिवाभवत् इत्यन्वयः ।

3339 अवारवाणतां वैरिरमणीकुचमण्डलैः ।
सार्धं दधाना दैत्योधानवेत्य सदृशात्मनः ॥६०॥

3340 *रेणुरोरोरुणार्णोररणारणिरणूरणैः ।
रराणैणारिणा रीणा रणेरां रीरणारिणा ॥६१॥

द्व्यक्षरः । युगलकम् । षड्भिः कुलकम्

3341 रणसिन्धुं सुमनसां तदानीमुत्तितीर्षताम् ।
सारित्रासकृदुत्कृष्टकर्णान्ता नौरिवाभवत् ॥६२॥

3342 वादिता तरसा भीमा [1]भेरीणां सकला ततिः ।
सादिता तत्र सायामा सारीणां सबला गतिः ॥६३॥

गोमूत्रिकाजालबन्धः

3343 तया कृतस्य सङ्ग्रामे वज्रनाभस्य भस्मसात् ।
उदात्त एव तत्रासीद्दर्पस्यान्तः सुरद्रुहाम् ॥६४॥

3344 [2]रथमर्दो भुवस्तस्या न तस्थावरतामदाम् ।
अनिर्जितरिपुः सापि न तस्थावरता मदात् ॥६५॥

3345 अम्भोधरच्छवीन्धाराशोभां च युधि बिभ्रतः ।
वाजिनो वाहयाञ्चक्रुः कृपाणांश्चाम्बिका भटाः ॥६६॥

3346 तायमानघनच्छाया याच्छानघनमायती[3] ।
नाल्पकप्रतिमास्थासु सुस्थामातिप्रकल्पना ॥६७॥

अनुलोमप्रतिलोमपादः युगलकम्

---

* रेणुरोरोरुणा अर्णोः अरणारणिः अणूरणैः ।
रराण एणारिणा रीणा रणेरां रीरणारिणा ॥ इति च्छेदः । ५६

अशून्या सा प्रमापणनिष्णातैः भटमण्डलैः स्फुटदंष्ट्रा चकासती एणारिणा रणेरां रीणा मृत्योः निषद्येव तदा अर्णोरिणां रणिः अणूरणैः रराण इत्यन्वयः ।

१. C भीरीणाम् ।

२. C रयामः भुवस्तस्या ""।

३. C याच्छानघनमायता ।

3347 संयुगेऽनर्गलस्थामपातितग्रहतारकैः ।
युगान्तोत्पातदेशीयैर्न सासह्यत दानवैः ॥६८॥　युगलकम्

3348 क्षतार्करक्तया दध्रे तदाश्वसितिमा नवः ।
तद्रूपं वीक्ष्य को न स्म तदाश्वसिति मानवः ॥६९॥

3349 जयश्रीरभसाकृष्टि-प्रसारितकरोपमैः ।
सव्यापसव्यविक्षिप्तैर्निघ्नती विद्विषः शरैः ॥७०॥

3350 या हतारिगणाजस्रमवदाता न सुन्दरान् ।
याता गजमदानन्दद्दहरिणास्रवतासुरान् ॥७१॥

समञ्जसबन्धो गूढार्थश्लोकः

3351 तयाधानि रुषा वज्रकेतुः केतुर्दिवौकसाम् ।
विकिरन्त्या रणे दृष्टिं क्षयोल्कापुञ्जविभ्रमाम् ॥७२॥　तिलकम्

3352 मायामूर्तीः द्विषः संख्ये साम्राक्षीदमितायुधा ।
तत्सेना च तया चक्रे साम्राक्षीदमिता युधा ॥७३॥

3353 दोर्दण्डदर्पोद्रेकेण सावज्ञं चरतो युधि ।
[1]प्रमथान्दानवानीके पारिप्लवतया सकृत् ॥७४॥

3354 *साशीः सशंसा शिशुसूः साशसाशु शशीशशित् ।
शशासाशासु सेशासु सांशुः शं शशशाशिसूः ॥७५॥

द्व्यक्षरः । युगलकम्

---

१. B प्रथमान् for प्रमथान् ।

*सासीः ससंसा शिशुसूः साशशासु शशीशशित् ।
शशास आशासु सेशासु सांशुः शं शशशाशिसूः ।। इति च्छेदः । ७५

साशीः सशंसा शिसुसूः साशसा शशीशशित् सांशुः शशशाशिसूः सेशासु आशासु दोर्दण्डदर्पोद्रेकेण सावज्ञं दानवानीके युधि चरतः प्रमथान् सकृत् पारिप्लवतया आशु शं शशास इत्यन्वयः ।

3355 सहस्रधा विभज्यापि स्थितमात्मानमाहवे ।
निनाय पञ्चतामेव द्विषं मायाशताकुलम् ॥७६॥

3356 सा संख्ये स्वःसदां शश्वद्देव तारा घनायते ।
तेन चक्रुर्मतिं नान्यदेवताराधनाय ते ॥७७॥

3357 तत्सङ्ग्रामान्तरिक्षं च वीथीमार्गपरिष्कृतम् ।
विचित्रमण्डलतया विदधारतरां श्रियम् ॥७८॥

3358 गजः परिणमन् दध्रे दन्तकोशमनङ्गदम् ।
द्विषां युधि व्यधत्तारादन्तकोऽशमनं गदम् ॥७९॥

3359 तिग्मांशुकरसंपर्कात्स्फुरन्ती करवालिका ।
कुब्जाप्येकस्य सङ्ग्रामे चतुरस्रां श्रिय दधौ ॥८०॥

3360 जघ्ने सिंहतनुश्चण्ड्याः सरुक्षितरवारिभिः ।
तत्सैन्यानि सुराश्चक्रुः सरुक्षि तरवारिभिः ॥८१॥

3361 कोदण्डास्फालनोत्तालरवकातरितद्विपः ।
योधास्तत्पुरुषत्वेऽपि विस्पष्टद्वन्द्वतां ययुः ॥८२॥

## चण्ड्या युद्धवर्णनम्

3362 चण्डी सेनासु कुप्यन्ती सादीपिष्टासुराहवे ।
श्रियमैक्षिष्ट तत्खड्गे सादी पिष्टासुराहवे ॥८३॥

3363 *शरदंष्ट्राकरालत्वं दधद्भिर्दानवान् रणे ।
नानानीकाननैः किं नु पृतनासु न भूभृतः ॥८४॥

---

*सा भूभृतःसुता रणे तासु पृतनासु दानवान् किं नु न याता ? आनुतिमात्रासु अङ्गनाशरस्थासु तारकसैन्यासु नानानीकाननैः भासिता सुन्यासैकरता कृत्तिवाससा सुस्था सरशना अङ्गना सुत्रामातिनुतासिभर इत्यन्वयः । ८४

3364　[1]भासितानुतिमात्रासु [2]सुन्यासैकरता सुता ।
नाङ्गनाशरसस्थासु सा याता कृत्तिवाससा ॥८५॥

3365　सासवात्तिकृतायासा सुस्था सरशनाङ्गना ।
तासु तारकसैन्यासु सुत्रामातिनुतासिभा ॥८६॥

प्रतिलोमानुलोमाभ्यां श्लोकद्वयं । तिलकम्

3366　तत्र स्फुटरसैश्चित्रैः सुश्लोकविनिबन्धनैः ।
अनेकसर्गैः सङ्ग्रामे महाकाव्यायितं भटैः ॥८७॥

3367　राजितानुमतावाररवा तामसकायसा ।
[3]सायकासरसा[4]राधधरा सारनुताजिरा ॥८८॥

असंयोगाक्षरानेकपाठनन्दिकवर्तनः

3368　केतनांशुकसीताङ्क ! रथप्लवकृतास्पदम् ।
सङ्ग्रामजलधेः [5]पारं पृतनास्वरिमण्डलम् ॥८९॥

3369　*सायासासु ससेयासु सायासासु यियासु सत् ।
सासिः सासूययेयासु सेयायासुसुसुः सुयुत् ॥९०॥

द्व्यक्षरः । तिलकम्

3370　तया कार्मुकमाकृष्टं नाशारम्भे सुरद्विषाम् ।
[6]उदचारयदोंकारमिव क्रेङ्कारमाहवे ॥९१॥

---

१. B भासितारुतिमात्रासु ।　　२. A, B, C सन्यासैकरता सुता ।

३. C सायकासरसाराधातुरासारनुताजिरा ।　　४. A सायकामरसारा धधरा ।

५. A सङ्ग्रामजलधेः पारम् ।

*सायासासु ससेयासु सायासासु यियासु सत् ।
सासिः सासूययेयासु सेयायासुसुसूः सुयुत् ॥ इति च्छेदः । ९०

सायासासु ससेयासु सायसासु सासूययेयासु पृतनासु राजितानुमता अवाररवा तामसकायसा सायकासरसा आराधधरा सारनुता आजिरा सासिः असुसूः सुयुत् सा अरिमण्डलं रथप्लवकृतास्पदं संग्रामजलधेः पारं इयाय इत्यन्वयः ।

६. A, B तददारयदोंकारमिव ।

3371 योऽनुकुर्वन्मृधे वर्धमानं दामोदरं जितः ।
न केनचिद्द्विषाभीक्ष्णमानन्दामोदरञ्जितः ॥९२॥

3372 स तया नागमारूढो विपाठैर्विरसीकृतः ।
बभ्राम गहनागाधे ग्रन्थतत्व इवाहवे ॥९३॥ युगलकम्

3373 नैष्ठुर्येण रणे चण्डी समग्रावा स्ववाजिभिः ।
नासह्यतारिभिः शक्त्या समग्रा वासवाजिभिः ॥९४॥

3374 अन्योन्यायोधनस्पर्धादुर्धरप्रसरोद्धुराः ।
तामभीयुस्तमस्काण्डकल्लोला इव ते द्विषः[1] ॥९५॥

3375 [2]वाञ्छितासरविनासा सात्राविरसताञ्छिता ।
साध्वसावहतायासं संयाता[3] ह वसाध्वसा ॥९६॥
अनुलोमप्रतिलोमपादः पादान्तयमकञ्च

3376 श्रियं चित्रीयमाणेन चरितेन दधत्यसौ ।
सज्जातिरेकानंशेति सुरैरस्तूयताहवे ॥९७॥

3377 [4]जयजायुयुजा युज्जिज्ज्यायो [5]योज्यज्ययेज्यया ।
याज्यया युयुजे [6]येयेऽजेयया याजजायया ॥९८॥ द्व्यक्षरः

3378 बिभ्रती हेतिसंदोहनक्रौधाकुलतां द्विषः ।
वेलेव पृतना विश्वक्षयोद्वृत्तस्य तोयधेः ॥९९॥

3379 सा दधत्याननं तुल्यमधानि विधुनानया ।
प्रणेमुषामविच्छिन्नमधानि विधुनानया ॥१००॥ युगलकम्

---

१. C ये द्विषः for ते द्विषः । २. C वाञ्छितामरविनासा ।

३. B संहृता for संयाता ।
C संहृता for संयाता ।

४. B, A जयजायि for जयजायु । ५. A याज्यज्ययेज्यया ।

६. A येयेऽजयेया for येयेऽजेयया ।

3380 पराचीनं विधायाशु सैन्यं समरदुर्मदम् ।
साञ्जसौजसिकस्याराद्धूम्राक्षस्योदजासयत् ॥१०१॥

3381 साराभा चिविभारासा राजितागगताजिरा ।
भाताजिते तेजिताभा चिगतेन नते गवि ॥१०२॥　　सर्वतोभद्रः

3382 नतानामनतानां च समं व्यवजहार सा ।
[1]निनायौर्जित्यमेकेषामन्येषां जीवितं क्षयम् ॥१०३॥

3383 अहन्यत बलं तेषां सदा नगजया तया ।
रेजे वीरवरूथिन्या सदानगजयातया ॥१०४॥

3384 बिभ्रती सुभटैनोच्चैराकल्पस्थितिचारुताम् ।
आलिङ्ग्यत रणे कीर्तिः स्वर्गनारी च तत्क्षणम् ॥१०५॥

3385 तांस्तथाविश्लथन्मौलिबन्धानाहितवेपथून् ।
वीरानासन्नपातत्वादसारान्साकृताहवे ॥१०६॥

3386 *तारोत्तारतरी तीरतरुतारीतिरुत्तरा[2] ।
तीरितारातिरातोरु तरुतारातिरुत्तरः ॥१०७॥ एकान्तरित । द्व्यक्षरः

3387 वैष्णवी समरक्रीडाविहारैकवयस्यया ।
गदया दैत्यलोकस्य शिरांसि युधि भिन्दती ॥१०८॥

---

१. A, B नानायौर्जित्य for निनायौर्जित्य ।

*तारोत्तारतरी तीरतरुतारीतिः उत्तरा ।
तीरितारातिरातोरु तरुतारातिः उत्तरः ॥ इति च्छेदः । १०७

तारोत्तारतरी तीरतरुतारीतिः उत्तरा तीरितारातिरातोरु तरुतारातिः समरक्रीडाविहारैकवयस्यया गदया द्विषतः दैत्यलोकस्य शिरांसि युधि भिन्दती पराञ्चि सुरसैन्यानि या वैष्णवी त्रायते स्म सा संख्ये अस्मया चित्रायते, परां श्रियं बभार ।

२. A तरुतीरीतिरुत्तराः for तरुतारीतिरुत्तरा ।

3388 द्विषतः सुरसैन्यानि पराञ्चि त्रायते स्म या ।
सा बभार श्रियं संख्ये परां चित्रायतेऽस्मया ॥१०९॥ तिलकम्

3389 कालरात्रिर्जवेनास्त्रपर्यस्तकुलपर्वता ।
वपुषाभ्रंकषेणाथ भीतिदा सुरविद्विषाम् ॥११०॥

3390 *जानुजेनानुजननी जानानाजजनैजनम् ।
निजाजिनेनानिजजो जनानूनानजीजनत् ॥१११॥
द्व्यक्षरः । युगलकम्

3391 भ्रमयन्त्या ज्वलच्छूलं माहेश्वर्यास्तदाभवत् ।
नभः पुरत्रयप्लोषशिखिनेव पिशङ्गितम् ॥११२॥

3392 अदभ्रभीतिदेऽनिन्द्ये दक्षमानच्छसादिनि ।
भ्रमागतगमासादे भीमतत्त्वमगच्छति ॥११३॥ अर्धभ्रमः

3393 समरे लक्ष्यभद्राश्वकेतुमाले निरर्गलम् ।
तस्मिन्नवनिनिर्माणविभाग इव दुर्गमे ॥११४॥

3394 रत्नाक्षमालां बिभ्राणा रणश्रीमणिमेखलाम् ।
[1]ब्राह्मी सरणसंरम्भविभ्रमा श्रियमासदत् ॥११५॥ तिलकम्

3395 अप्राप्तां संयुगे प्रांशुकेतुदन्तिनि शान्तताम् ।
कुर्वती विशिखैस्तां स्म के तुदन्ति निशां तताम् ॥११६॥

3396 अन्यथा युध्यमानैन्द्री दैत्यानां हृदयाविधा ।
कृतमार्गणकृत्यासीत्सहस्रेणैव चक्षुषाम्[2] ॥११७॥

---

*जानुजेन अनुजननी जानानाजजनैजनम् ।
निजाजिनेन अनिजाजो जनान् ऊनान् अजीजनत् । इति च्छेदः । १११
अनिजाजो निजाजिनेन जानुजेन आजजनैजनं जानाना अनुजननी जनान् ऊनान् अजीजनत् इत्यन्वयः ।

१. B चक्षुषा for चक्षुषाम् । २. C ब्राह्मीमरणसंरम्भ ।

3397 गीर्वाणजनताऽभ्येत्य तुष्टाव सरतोऽनु ताम् ।
द्विषो वीक्ष्य रणाद्भीत्या तुष्टाव सरतो नुताम् ॥११८॥

3398 बिभ्रती रत्नकोदण्डपरिवेषविभीषणम् ।
सोद्धृत्तारिकुलोत्पातचन्द्रबिम्बमिवाननम् ॥११९॥

3399 *रलीलोलारिरल्लाली लीलालूरैरिरल्ललाः ।
रोलोल्लोलैररालैलीरुररोरोररीरलम् ॥१२०॥ द्व्यक्षरः । युगलकम्

3400 शिखण्डजितपिच्छश्रीर्नम्रवक्त्रेण केकिना ।
उह्यमाना ज्वलच्छक्तिः कौमारी रणमासदत् ॥१२१॥

3401 विनिर्धूतरविद्योतामहोष्टाशान्तरेणुना ।
गणसैन्येन सा लक्ष्मीमहोष्टाशान्तरेऽणुना ॥१२२॥

3402 सशङ्खपद्मा कौवेरी वैष्णव्याः श्रियमासदत् ।
द्विषच्छिरः [1]कन्दुकौघैः सारंस्त न न तापदम् ॥१२३॥

3403 बिभ्रती संयगोत्पातमहोल्कामतनुं गदाम् ।
नयन्त्यरिकुलं स्थेयः सारं स्तननतापदम् ॥१२४॥

3404 सान्धकारा दिशः सर्वाः कुर्वती रणरेणुभिः ।
तामभीयाय गर्जन्ती या तदा वृषपर्वणः ॥१२५॥

3405 *नतया सेनया तत्र यातया नुत्तया तनु ।
नुत्तयात्तरयान्विष्टपातया सेनयेक्षिता ॥१२६॥

मुरजबन्धः । युगलकम्

---

१. A कार्मुकौघैः for कन्दुकौघैः ।

*रलीलोला रिरल्लाली लीलालूः ऐरिरत् ललाः ।
रोलोल्लोलैः अरालैलीः उररोरोररीः अलम् ॥ इति च्छेदः । १२०

रत्नकोदण्डपरिवेषविभीषणं आननं सोद्धृत्तारिकुलोत्पातचन्द्रबिम्बमिव बिभ्रती रलीलोला रिरल्लाली लीलालूः रोलोल्लोलैः अरालैलीः उररोरोररीः अलं ऐरिरत् ।

*रणरेणुभिः सर्वाः दिशः सान्धकाराः कुर्वती या गर्जन्ती तामभीयाय तदा सा अनया तनु नतया यातया नुत्तया नुत्तयात्तरयान्विष्टपातया सेनया नेक्षितेतिकाकुः ।

3406 कृतानुबन्धामुत्पश्यन्नाग्नेयीं धारणामिव ।
जगत्कृतमवैल्लोकः सर्वमेवात्र भस्मसात् ॥१२७॥

3407 करिसिन्धुततिश्चारु कटकच्छा ययाधिकम् ।
भिन्नारेर्या तदा रेजे कटकच्छाययाधिकम् ॥१२८॥

3408 कृतपुंखोऽपि सङ्ग्रामे दैत्यलोको निरर्गलम् ।
संप्राप्य न [1]न्यवर्तिष्ट यास्यां यमपुरीमिव ॥१२९॥ युगलकम्

3409 कीर्तिर्जह्ने समीकेषु नवैव स्वतया तया ।
भ्रुकुट्या मुमुचे चासौ न वैवस्वतयातया ॥१३०॥

3410 युधि क्षयघनस्येवविद्युज्जिह्वस्य गर्जतः ।
प्रतिनादच्छलेनाशा भीता इव विचुक्रुशुः ॥१३१॥

3411 दधौ धिया सपत्नेषु यया वैरावतंसताम् ।
विगर्ह्यः स तमारूढो ययावैरावतं सताम् ॥१३२॥

3412 तेजस्विमण्डलस्यारात्कुर्वन्नन्तर्धिमाहवे ।
अभ्रंकषवपुः श्रीमान् स तदास्ताचलोऽभवत् ॥१३३॥

3413 तं चिरेण [2]गतायासा समायापक्षपातिनी ।
[3]नीतिपा क्षपयामास सा याता गणरेचितम्[4] ॥१३४॥
अनुलोमप्रतिलोमार्धोऽयम्

3414 अनारोपितबाणेन वारुणी धनुषा क्षणम्[5] ।
निजमण्डलसंस्थानचारुणा विरराज सा ॥१३५॥

---

१. A निर्वर्तिष्ट for न्यवर्तिष्ट ।

२. A गतायामा for गतायासा । ३. नीतपा for नीतिपा ।

४. C गणरेचितः । ५. C, B क्षयम् ।

3415 *लालितैलीलतालाता लीलाललिततातता ।
तालोत्ताला [1]तिलतुलालोलितालुलितालिता ॥१३६॥

द्व्यक्षरः । युगलकम्

3416 [2]विस्पष्टसुन्दरसिता दैत्यसेनाकुमुद्वतीः ।
तीक्ष्णैरंशुशरव्रातैः सौरी च समचूकुचत् ॥१३७॥

3417 शातटङ्काः प्रमादेन हीयमाना रणाजिरे ।
चापटांकारनादेन साभिमाना रराजिरे ॥१३८॥　　　　काञ्चीबन्धः

3418 चापमाहवसंरम्भकर्णान्ताकृष्टिचक्रितम् ।
वायव्या विभरामास निजमण्डलविभ्रमम् ॥१३९॥

3419 विषेहे सेनया संख्यसहा सा शातटङ्कया ।
रुन्धानया रिपोर्भूम्ना सहासाशातटं कया ॥१४०॥

3420 विडम्बयन्ती सार्धेन्दुमण्डलामष्टमीनिशाम् ।
सा दीप्रपरशुः संख्ये श्रियं वैनायकीं दधौ ॥१४१॥

3421 सार्धचन्द्रशरव्रातैः शरीराणि सुरद्रुहाम् ।
चकारानलकान्याजौ वदनानि[3] च योषिताम् ॥१४२॥

---

*लालितैलीलतालाता लीलाललिततातता ।
तालोत्ताला तिलतुला-लोलिता-लुलिता-आलिता ॥ इति च्छेदः । १३६

लालितैलीलतालाता लीलालुलिततातता तालोत्ताला तिलतुला आलोलिता लुलितालिता या वारुणी सा अनारोपितवाणेन निजमण्डलसंस्थानचारुणा धनुषां क्षणं विरराज इत्यन्वयः ।

१. C तुलतुला for तिलतुला ।

२. A विस्पप्टसुन्दरमिता for विस्पष्टसुन्दरसिता ।

३. A वचनानि for वदनानि । B omits 1·6th and 147th श्लोक while C omits 147th श्लोक ।

3422 स्वनश्रिया ध्वनद्योच्चैः सा गरीयस्यमा यया ।
सा जिगाय ध्वनेः कौर्यं सागरीयस्य मायया ॥१४३॥

3423 तामभ्ययुंक यासंख्यसंख्यावद्भिर्वृता भटैः ।
सूचिरोम्णश्चमूर्नादैः सूचितप्रलयागमा ॥१४४॥

3424 भासेद्धाहाततनना सादिमायादसेविता ।
सासहस्ततयाशान्तसारा हितसमिद्युता ॥१४५॥

प्रस्तारश्लोकः

3425 सहसा दितिसेनाशा तयासे साहितद्युता ।
यातावित्रस्तरासाद्धा सभामा तदनन्तसित् ॥१४६॥

चतुरङ्गाश्वपदपूरणश्लोकः । तिलकम्

3426 रुन्धत्या ककुभः सर्वा विकर्णैरप्यजिह्मगैः ।
सेनया वृषसेनस्य सङ्ग्रामाग्रभुवस्तदा ॥१४७॥

3427 *[2]लीलायायिययूल्लोलयेयया लायलोलया ।
लायिलोलूययालीय [3]लुलायायिलयं यये[4] ॥१४८॥

द्व्यक्षरः । युगलकम्

3428 सराक्षसपुरीदाहलग्नमारुतिविभ्रमः ।
अजृम्भत सुरारीणां पादपातिततोरणः ॥१४९॥

---

*लीलायायिययूल्लोलयेयया लायलोलया ।
लायिलोलूयया आलीय लुलायायिलयं यये ॥ इति च्छेदः । १४८

तदा ककुभः सर्वाः विकर्णैरप्यजिह्मगैः रुन्धत्या सेनया वृषसेनस्य सङ्ग्रामभुवः लीलायायिययूल्लोलयेयया लायलोलया लायिलोलूयया आलीय लुलायायिलयं यये इत्यन्वयः ।

२. A लीलया for लीलाया ।

३. A लूलायायि for लुलायायि । ४. C यथा for यये ।

3429 शक्तीर्वहन्तो यशसा नवा युयुधिरे चिताः ।
चक्रमुख्यासुरा भीत्या न वायुयुधि रेचिताः ॥१५०॥

3430 दिवौकसामथोद्दामवेगदण्डहता भृशम् ।
विनेदुः परुषं भेर्यो वरूथिन्यश्च संयुगे ॥१५१॥

3431 ससार पृतना नाना धुनानारिं ससाहसा ।
सतर्जनगुणास्फोट-धीरयोधगणासुरी ॥१५२॥ शक्तिबन्धः

3432 दिवोऽवतीर्णेव भुवं जगत्प्रलयकालिका ।
वाराही मलिनच्छाया प्रभा भानोस्ततस्तरत् ॥१५३॥

3433 युधि चक्रं द्विषामाशु नीरन्ध्रसमयं वियत् ।
अकृताम्भोदनिर्मुक्तनीरं [1]ध्रसमयं वियत् ॥१५४॥

3434 *सा ररास सरारासा साराराससरारसा ।
साररा ससरारासासारा राससरा रसा ॥१५५॥ द्व्यक्षरः

3435 स्थिराजिरप्यस्थिराजिसाराप्रतिमया रुचा ।
चामुण्डा बद्धवैरा सा जितारातिर्मृधे बभौ ॥१५६॥ मुसलबन्धः

3436 रणे [2]सुरद्रुहां सैन्यं तदास मरुतां गणम् ।
रणस्य च शिवा भेजे तदासमरुताङ्गणम् ॥१५७॥

3437 कृतान्तवेश्मपदवीविभ्रमाभिर्महाहवे ।
सुरासुरगणा जघ्नुर्गदाभिरितरेतरम् ॥१५८॥

---

१. B ध्रसान्यायुधभेदः (footnotes) ।

*सा ररास सरारासा साराराससरारसा ।

साररा ससरारासासारा राससरा रसा ॥ इति च्छेदः । १५५

सरारासा साराराससरारसा साररा ससरारासरारा राससरा रसा सा ररास इत्यन्वयः ।

२. B सुरद्रुहः for सुरद्रुहाम् ।

3438 सेनापर्यस्तनाराचचक्रासाराजितासुरा ।
राजराजस्य दानाम्बुविष्यन्दिकटकुञ्जरा ॥१५९॥

3439 रासभिन्ननभोरन्ध्रदिङ्मुखा सा रणाजिरे ।
रेजेऽस्त्रसारं [1]सानन्दहारश्रियमुपाश्रिता ॥१६०॥

श्लोकाभ्यां खड्गबन्धः

3440 आलिङ्गिता युधि प्राज्यशार्वरागतया श्रिया[2] ।
गौरीव युद्ध्यमानासीदपर्णा स्वामिनश्चमूः[3] ॥१६१॥

3441 संयुगेऽतिसहस्रांशुनवधामर्षितापिभिः ।
नादीप्यतासुरैस्तत्र न वधामर्षितापिभिः[4] ॥१६२॥

3442 वह्निज्वालापिशङ्गोर्ध्वकेशैर्यातुभिरन्विता ।
लङ्केव नैरृती रेजे युधि त्रासकरी द्विषाम् ॥१६३॥

3443 तद्व्रणं रेणुरूपेण नामोचि तमसा वरम् ।
यत्राकृततरां शूरो नामोचितमसावरम् ॥१६४॥

3444 उरोमणिश्रिया शौरिविभ्रमं युधि बिभ्रतः ।
अविपन्नपुरस्कारा रेजिरे गुरवो गजाः ॥१६५॥

3445 विद्विषः समरेऽनन्यसमायासयमानया ।
अघानि रौरवी सेना समाया [5]सयमानया ॥१६६॥

---

१. A, C सानन्दहाराश्रियमुपाश्रिता । २. A, C शार्वरागतरा श्रिया ।
३. B, C स्वामिना चमूः । ४. C नवधामर्पतापिभिः ।
५. B, C समयानया ।

3446　कलापशोभां बिभ्राणमथासाद्य शिखण्डिनम् ॥
नागैरिव रणाद्भीतैर्विनेशे दानवाहिभिः ॥१६७॥

## मेघनीलयुद्धवर्णनम्

3447　स्फुरत्कुण्डलरत्नौघतडित्किरणकर्बुरः ।
मेघनीलोऽथ संग्रामे प्रावृट्काल इवाबभौ[1] ॥१६८॥

3448　शरव्याप्तिप्रवणतां दधतो रणमूर्धनि ।
कृतपुंखा भटास्तस्य मार्गणाश्च विरेजिरे ॥१६९॥

3449　येन व्यधायि स्वर्गो न नाशक्रो धानुषं गतः ।
स क्रौर्यं शब्दमतनोन्नाशक्रोधानुषङ्गतः ॥१७०॥

3450　तीक्ष्णशल्यनखाग्राभिर्मार्गणाङ्गुलिभिः क्रमात् ।
यूधि गीर्वाणसेनायाः पत्त्रभङ्गं व्यधत्त सः ॥१७१॥

3451　[2]आकृष्टा धनुषो दूरं ज्या यस्य ध्वनितानवम् ।
[3]तेनाजेर्द्विट्चमूर्निन्ये ज्यायस्यध्वनि तानवम् ॥१७२॥

3452　संख्ये बलिभुजं तत्र नवायसमपि क्रुधा ।
अभ्यापतन्तं तं वैरिपृतना न विषेहिरे ॥१७३॥

3453　संरम्भः स बभूवास्य सारवैरिवधे नवः ।
वलितैस्तत्रसुः सेना सारवैरिव धेनवः ॥१७४॥

3454　असह्योऽपि महीभृत्त्वं बलभद्रोऽप्यसीरिताम् ।
अकूटात्मापि तुङ्गत्वमधत्ताद्भुतवृत्ति यः ॥१७५॥

---

१.　B प्राकृट्कालवदाबभौ ।

२.　A, B आकृष्टधनुषो ।　　३.　B तेजानो for तेनाजेः ।

3455 *नानेनानिललोलेन लीलोल्लोलेन लोलिना ।
नुन्नानूनानलेनैलीलूनाननलेन नो ॥१७६॥ द्व्यक्षरः

3456 अर्धचन्द्रनखन्यासैरभियोगपटीयसा ।
अभाजि [1]भूम्नाभीकेन सेनासीमन्तिनीं द्विषः ॥१७७॥ तिलकम्

3457 खड्गस्यानुकृतक्रूरपातालातस्य साधुता ।
क्ष्मा चासीदिषुभिर्भिन्नपाताला तस्य सा धुता ॥१७८॥

3458 सप्रस्तारे रणे तस्य कराग्रैः प्रतिहारिभिः ।
सामजत्वस्य सदृशं व्यधीयत विषाणिभिः ॥१७९॥

3459 सुरस्त्रीणां दृशो भग्नकलावति कलावति ।
निपेतुस्तत्र तिग्मांशुविभासिनिविभासिनि ॥१८०॥

3460 अनेकमुखतां बिभ्रत् कर्तात्र युगद्वतेः ।
द्विषतां संप्रहारेऽसावेककः कमलासनः ॥१८१॥

3461 *वायवीयाय वायव्यययुयाय्यव्ययाय यः ।
व्येयो वयोव्ययायैव ययाववयवी युवा ॥१८२॥ द्व्यक्षरः

---

*न अनेन अनिललोलेन लीलोल्लोलेन लोलिना ।
नुन्ना अनूनानललोलेन एलीलूनाननलेन नो ॥ इति च्छेदः । १७६

अनेन मेघनीलेन द्विषः सेनासीमन्तिनीः नुन्ना नाभाजि नो ? अपितु भग्ना सेविता । त्वं असह्योऽपि महीभृत्, बलभद्रोऽपि असीरिताम् अदधत्, अकूटात्मापि तुङ्गत्वमदधत् । अनिललोलेन लीलोल्लोलेन अनूनानललोलेन लोलिना एलिलूनाननलेन अर्धचन्द्रनखन्यासैः अभियोगपटीयसा अभीकेन भूम्ना नुन्ना नाभाजि नो ? इत्यन्वयः ।

१. A भूषीभीकेन for भूम्नाभीकेन ।

*वायवीयाय वा अयव्ययययुयायी अव्ययाय यः ।
व्येयो वयोव्ययाय एव ययौ अवयवी युवा ॥ इति च्छेदः । १८२

अयव्ययययुयायी अव्ययाय व्येयो अवयवी यः वायवीयाय वा अयव्ययययुयायी युवा वयोव्ययायैव ययौ—इत्यन्वयः ।

3462 सिसङ्ग्राममयिषुस्तेन वद्धामर्षारिमण्डली ।
संगराङ्गन[1]मुद्गूर्णशस्त्रच्छायान्धकारितम् ॥१८३॥

3463 याजरापचदाक्षोददक्षोदात्तपराजया ।
साक्षनामगताधानि निधातागमनाक्षसा ॥१८४॥
प्रतिलोमानुलोमार्धः । युगलकम्

3464 चित्रमक्षणिकस्यापि तत्क्रियां प्रतिसंयुगे ।
पर्याप्तयौगपद्याभ्यां यद्विरोधोऽस्य नाभवत् ॥१८५॥

3465 रणोऽभूत्स्पष्टसंघट्टरथदानवनायकः ।
स्पृहयामास नैवालिरथ दानवनाय कः ॥१८६॥

3466 वीरभद्रस्य सङ्ग्रामे युध्यमानस्य निर्भरम् ।
सेहे न प्रसरे दैत्यैः क्षयवायोरिवाद्रिभिः ॥१८७॥

3467 विदधुस्तत्र संरम्भं शूरतापिनि तापिनि ।
द्विषन्तो युधि साटोपं दानवर्तिनिवर्तिनि ॥१८८॥

3468 ददर्शेऽन्यत्र चण्डीशः शूलं रणरसोल्लसः ।
भ्रमयन्ननलज्वालातापसंशोषिताम्बुधि ॥१८९॥

3469 यो [2]हन्तुं समरे भीतानपलालसमानसः ।
पश्यत्यरिचमूर्दग्धुं न पलालसमा न सः ॥१९०॥

3470 चक्षुर्विक्षिप्य रूक्षाग्रपक्ष्मपर्यन्तपाटलम् ।
तस्थावखण्ड-कोदण्ड-चण्ड-दोर्दण्ड-मण्डलः ॥१९१॥

3471 स चकार चमूर्युद्धे मतिमानवमा यया ।
विसिस्मिये तया विश्वमतिमानवमायया ॥१९२॥

---

१. A मुद्गूढ for मुद्गूर्ण । २. हतुं for हन्तुम् ।

3472 दधत्या स्थितिमारूढ-भोगिभद्रश्रियाकुलाम् ।
संप्रहारभुवा तस्य मलयाधित्यकायितम् ॥१९३॥

3473 स दिक्षु यशसा लोकानवाच्योऽष्टासु रञ्जयन् ।
न चक्लाम मृधे धैर्यान्न वाच्योष्टासुरं जयन् ॥१९४॥

3474 विप्रचित्तेः समीके यत्सैन्यमभ्यापतत् क्रुधा ।
दधन्मूर्तीः सदक्षिस्त्रिमूर्ति-परमेष्ठिना ॥१९५॥

3475 *मदमेदोदुदुद्दामदामामोदमुदं ददत् ।
ममादिमददो दुद्दमदमोददवीदमत्[1] ॥१९६॥ द्व्यक्षरः । युगलकम्

3476 प्रह्लादपृतनाचक्रं ह्लादैर्मुखरयद्दिशः ।
स तारकगणेनोच्चैः संप्रहारे हिमत्विषा ॥१९७॥

3477 ततो रसादशान्तेन दशान्तेन कलापिना ।
कलापिना तदासेवि तदासे विततोरसा ॥१९८॥
सन्दष्टयमकम् । युगलकम्

3478 करे परिव्राज इव प्रधनेऽधिकमण्डलौ ।
निशाकरसहस्रांशू[2] दैत्यान् क्रोधान्निजघ्नतुः ॥१९९॥

3479 दैत्यचक्रमभूद्भग्नप्रभावरणमश्वि तत् ।
इन्दोश्च मण्डलं सान्द्रप्रभावरणमश्वितत् ॥२००॥

3480 अपूर्यन्त [3]दिशः स्पष्टसंयुगोत्कर्षभैरवैः ।
ककुभः प्रावृषीवाथ त्रिदशासुरमण्डलैः ॥२०१॥

---

*मदमेदोदुत् उद्दामदामोदमुदं ददत् ।
मम आदिमददः दुत् अमदं ओददीदमत् ॥ इति च्छेदः । १९६

१. A, B, C दुद्दमदमोददीदमत् ।

२. A, C दैत्याः for दैत्यान् । ३. C आपूर्यन्त युधि for आपूर्यन्त दिशः ।

3481 श्रियं दैत्याधिपाः सैन्यैरासदण्डामरोचितैः ।
दधद्भिस्तृणतां चोच्चैरासदण्डामरोचि तैः ॥२०२॥

3482 तरसामलकीनाशशून्यां शरभदानवः ।
सङ्ग्रामोर्वीं व्यधत्ताथ हिमशैलतटीमिव ॥२०३॥

3483 सर्वात्मना रणे तस्मिन्नवतामसमञ्जसा ।
तेनावेशि द्विषां सेना नवतामसमञ्जसा ॥२०४॥

3484 आमर्दकस्तमभ्यागात् नवाञ्जनमलीमसैः ।
अन्वीयमानो दितिजैः प्रावृट्काल इवाम्बुदैः ॥२०५॥

3485 स मार्गणगणं दूरमस्तं भीदस्य तीव्रताम् ।
सङ्ग्रामकरिणः प्राप्तमस्तम्भीदस्यतोऽत्र ताम् ॥२०६॥

3486 [1]पारिप्लवहरिव्रातो वैजयन्त्यच्छनिर्झरः ।
रराज कूबरी केतोर्मन्दराद्रिरिवाहवे[2] ॥२०७॥

3487 सोऽवैक्षत द्विषां तस्मिन्नवाचामन्तिके स्थिताम् ।
प्राप्तं योधं शिवौघाः स्म नवाचामन्ति केऽस्थिताम् ॥२०८॥

3488 पिषन् गजघटा गुर्वीरुर्वीधरगुरून्नताः ।
बभार कालमुसलो रणमूर्ध्नि यथार्थताम् ।।२०९॥

3489 ललाटेनान्वयंस्तुंगनासोऽष्टापदमायताम् ।
स रणोर्वीमरातीनां नासोऽष्टापदमायताम् ॥२१०॥

3490 ततः क्रौर्योदधेर्दीर्घैः स्रोतोभिरिव मानिनाम् ।
निस्त्रिंशैर्व्याप्तदिक्चक्रमभ्यैद्धूर्जटिराहवम्[3] ॥२११॥

---

१. A, B, C पारिप्लवहरिव्रातैः ।　　२. A रिहाहवे for रिवावहे ।

३. A धूर्जटिमाहवहम् for धूर्जटिराहवम् ।

3491 दुरुत्सहत्वं सङ्ग्रामे न वाहिन्या स कृच्छ्रयन् ।
विररामासुरव्यूहं नवाहिन्यासकृच्छ्रयन् ॥२१२॥

3492 कृताट्टहासास्तत्सैन्ये विरूपाक्षतयान्विताः ।
सक्ष्वेडकण्ठाः [1]प्रमथास्तद्वैदग्धीं समासदन् ॥२१३॥

3493 *ससारौरससीरीरां ससिरं राससूररम् ।
संसारारिः ससारोरुः स सूरिरसिसाररुत् ॥२१४॥ द्व्यक्षरः

3494 नित्याञ्जनोपयोगेन नयनानीव विद्विषाम् ।
निर्जितानामनर्माणि येन स्त्रैणानि चक्रिरे ॥२१५॥

3495 [2]स पुरेव जटानद्धसारवासुकिराततम् ।
बभारारातिसेनासु सारवासु किराततम् ॥२१६॥

3496 वह्निगर्भचमूर्या च सप्तलोकाभिभाविनी ।
त्रिलोकीसरसीक्षोभकरेण हरहस्तिना ॥२१७॥

3497 हरिणैरिह साकं सा सायासा विगता गवि ।
विभुना भुवि सारासा तुङ्गा तु निहताहनि ॥२१८॥
प्रातिलोम्येन स एवार्थः । युगलकम्

3498 लीलालुञ्चितपुङ्खस्थपतत्त्रमरुताहवे ।
संधुक्षयद्भिर्विशिखैः प्रतापाग्निमिवोद्धतम् ॥२१९॥

---

१. C प्रथमाः for प्रमथाः ।

*ससार औरससीरीरां ससिरं राससूः अरम् ।
संसारारिः ससारोरुः सूरिः असिसाररुत् ॥ इति च्छेदः । २१४

राससूः संसारारिः संसारोरुः सूरिः असिसाररुत् सः शम्भुः औरससीरीरां ससिरं अरं ससार इत्यन्वयः ।

२. C स पुरेव जटावद्ध for स पुरेव जटानद्ध ।

3499 *शिशुना शशिनानंशुनाशोऽनूनो निशोऽनिशम् ।
नाशाननानि नानांशो नेशानो नानशे शनैः ॥२२०॥

द्व्यक्षरः । युगलकम्

3500 सन्मात्राच्युतकं तस्य संप्रहारमहीतलम् ।
स्पष्टान्धकश्रियं विभ्रत्क्रीडाकाव्यमिवाबभौ ॥२२१॥

3501 मुष्णन्तं जीवितधनं स व्यंसकुसुमालकम् ।
जघान भर्ता देहार्धं सव्यं सकुसुमालकम् ॥२२२॥

3502 त्रैलोक्यप्रलयोत्पातदशा इव निरर्गलाः[1] ।
युधि केतुमतीदूरादापतन्तीः सुरद्विषाम् ॥२२३॥

3503 *तैः शातिताशोऽतीताशीः शिशुशीतांशुताततः ।
[2]तोत्तेशिताशिताशातैः शतशोऽतुत्त ताः शितैः ॥२२४॥

द्व्यक्षरः । युगलकम्

3504 समवर्तिपुरीवाथ विशिखावलिशोभिनी ।
व्यशीर्यताशु तं प्राप्य वज्रबाहुवरूथिनी ॥२२५॥

3505 तदा क्षणेन वीर्यस्य समदः सहितः पदम् ।
रेजे स्तुतनयः साक्षान्नयवेदी क्षतामतः ॥२२६॥

---

*शिशुना शशिना अनंशुनाशः अनूनः निशः अनिशम् ।
न आशाननानि नानांशः नेशानो न आनशे शनैः ॥ इति च्छेदः । २२०
शिशुना शशिना अनंशुनाशः निशः अनूनः नानाशः ना ईशानः शनैः अनिशम् आशाननानि न आनशे इति न । अपि तु व्याप्तवानेव इत्यन्वयः ।

१. B निरर्गलं for निरर्गलाः ।

*तैः शातिताशः अतीताशीः शिशुशीतांशुताततः ।
तोत्ता ईशिता अशिता आशातैः शतशः अतुत्त ताः शितैः ॥ इति च्छेदः । २२४
त्रैलोक्यप्रलयोत्पातदशा इव निरर्गलाः दूरादापतन्तीः सुरद्विषा केतुमती युधि शातिताशः अतीताशीः शिशुशीतांशुताततः तोत्ता अशिता ईशिता शितैः आशातैः शतशः अतुत्त इत्यन्वयः ।

२. C ततोशिताशिताशातैः ।

3506 तदाक्षयेन वर्यस्य [1]समिदः सहतः पदम् ।
रेजेऽस्ततनयः साक्षान्नयवेदे क्षतामतिः ॥२२७॥

3507 [2]तदेक्षयेन वर्यस्य सामदः सहितः पदम् ।
रेजे स्तुतिनयः साक्षान्नयवादोक्षितामृतः[3] ॥२२८॥

3508 [4]मनोरथं सुरारीणां विशिष्टनडकूबरम् ।
श्लथचक्रं चकाराजौ वज्रनामं रुषोत्थितम्[5] ॥२२९॥

3509 *मयमायामयायाममायी मममयोऽयमः ।
येयोऽमायमियायामुममेययमयोमया ॥२३०॥ द्व्यक्षरः

3510 तस्य वेणीलता तेन सङ्ग्रामादपसर्पतः ।
अयशःपदवीवाथ ददृशे पृष्ठवर्तिनी ॥२३१॥

3511 तत्र सुर्मण्डलीबन्धैस्तस्मिंश्चरति तद्भटाः ।
ते कृपापाकृते ध्यानिनिध्याते निर्दितार्दिनि ॥२३२॥ शूलबन्धः

3512 त्रिशिखेन पुरप्लोषवह्निनेवायुधेन सः ।
सूचिलोमानमायान्तं प्रतिलोमगतिं द्विषाम् ॥२३३॥

---

१. A, C समदः for समिदः । २. B omits this श्लोक ।
३. A, C वादोक्षितामतः । ४. C मनोरथे सुरारीणां ।
५. B वज्रवाहुरुषोत्थितम् ।

*मयमायामयायाममायी मममयाः अयमः ।
येयो अमायम् इयाय अमुं अमेययमय उमया ॥ इति च्छेदः । २३०

मय-माया अमय आयाममयी मममयः अयमः येयः अमेययमया उमया सह अमुं वज्रवाहुं अमायं कृत्वा इयाय इत्यन्वयः ।

3513 *विविधाधिवधे धीवा विधिवेधा [6]धवावधिः ।
धीधावी वीवधी वध्वा विवैधी विधुधोऽवधीत् ॥२३४॥
द्व्यक्षरः । युगलकम्

3514 निजघान रणे सेनास्वसौ दुश्च्यवनो बलम् ।
अशेषसुरनाथोऽपि विपुलोमात्मजादरः ॥२३५॥

3515 यश्चकार द्विषे कुप्यन्नवक्त्रासवतां सभाः ।
नासौ न तिष्ठते न्यायानवक्त्रासवतांसभाः ॥२३६॥

3516 प्रहारमूर्च्छया विम्रदाकुलत्वं तमन्यतः ।
केतुवाहो रणे सैन्यमपश्यन्नीललोहितम् ॥२३७॥

3517 *गारागारोरगोग्रोरा गौरीरागी गुरुर्गिराम् ।
गौरागुरुगिरीरागो गौररेर्गुरुरोगरुक् ॥२३८॥　　द्व्यक्षरः

3518 सनागराजकटकः सुगुहस्तुहिनोज्ज्वलः ।
तुषाराद्रिरिवाभाति योहिमानीशतास्पदम् ॥२३९॥

3519 यो भाति प्रत्ययोत्कर्षादक्षयज्ञानलाभया ।
दृशा च सरुषा ध्वस्तदक्षयज्ञानलाभया ॥२४०॥　　चक्कलकम्

3520 नानादेवकुलाकीर्णं सद्धर्म्यस्थिति तद्रणम् ।
चित्ररथ्याकुलं भेजे कृतान्तनगरश्रियम् ॥२४१॥

---

*विविधाधिवधे धीवा विविवेधा धवावधिः ।
धीधावी वीवधी वध्वा विवैधी विधुधोऽवधीत् ॥ इति च्छेदः । २३४

विविधाधिवधे धीवा विधिवेधा धावधिः धीधावी वध्वा वीवधी विवैधी विधुधः सः पुरप्लोषवह्निना इव त्रिशिखेन आयुधेन द्विषां प्रतिलोमगतिं आयान्तं सूचिलोमानमवधीत् इत्यन्वयः ।

*गरागारोरगोग्रोरा गोरीरागी गिरां गुरुः ।
गौरागुरुगिरीरागः अरेः गोः (इव) गरुरोगरुक् ॥ इति च्छेदः । २३८

3521 दुर्भेद्यया चमूस्तस्य माययावसितोषिता ।
रणे शौर्यगृहे क्रौर्यमाययावसितोषिता ॥२४२॥

3522 तस्योच्चैः सङ्गरे तस्मिन्नवारिद्मनो रथः ।
शरत्काल इवाभासीद्दलयन्नमरद्विषः ॥२४३॥

3523 *सोमासोमः [1]समांसांसः सोममासोऽसमोऽसिमान् ।
[2]ममासेसु समीमांसमासामास सुसामसूः ॥२४४॥ द्व्यक्षरः

3524 सन्मण्डलाग्रतामेकपिङ्गलानुगतो दधत् ।
स भास्वांस्त्रिदशारातीञ्जघानोल्लाघवान् रणे ॥२४५॥

3525 सञ्चरिष्णुः ससंरंभं स ना तनयशोभितः ।
शौर्यमप्रथयत्संख्ये सनातनयशोऽभितः ॥२४६॥

3526 क्षयानिलैरिवाशेषविवर्तनसहैरुरोः ।
सैनिकैस्तस्य कार्त्स्न्येण सावहेलं विलोकितैः ॥२४७॥

3527 *भीरोरैररिभिर्भाभै रभारीरा भरेरिभिः ।
रुरुरीभिरुरभ्राभा भ्राभारिभिरुरूरुभिः ॥२४८॥ युगलकम् । द्व्यक्षरः

3528 स धीरमुरजोद्दामगर्जाः शीकरवर्षिणः ।
गजधारागृहा रेजुस्तस्याशून्याः कलापिभिः ॥२४९॥

---

*सोमासोमः समांसांसः सोममासः असमः असिमान् ।
ममासेसु समीमांसम् आसामास सुमाममूः ॥ इति च्छेदः ।
सोमासोमः समांसांसः सोममासः असमः असिमान् सुसामसूः ममासेसु समीमांसं आसामास इति अन्वयः ।

१. C सुमांसांसः । २. C सममांस समीमांस ।

*भीरोरैः अरिभिः भाभैः अभारि ईश भरेरिभिः ।
रुरुरीभिःउरभ्राभा भाभारिभिः उरूरुभिः ॥ इति च्छेदः । २४८
भीरोरैः भाभैः भरेरिभिः रुरुरीभिः अतएव उरभ्राभा भाभा उरूरुभिः अरिभिः ईश अभारि इत्यन्वयः ।

3529 रणे सङ्कुलतां प्राप्ते सज्जटङ्करवारिभिः।
तद्वपुः करिणासेचि सज्जटं करवारिभिः ॥२५०॥

3530 दानवानां रुषा सैन्यं दैत्यानां च युयुत्सु तत्।
सेनयानुगतः संख्ये सरस्वानिव वेलया ॥२५१॥

3531 *भूयेयोऽभययायीभ्यो भूयो योऽभीभयोऽभयम्।
ययाभिभूय भूयोऽयं भाभोऽभीयाय भाययन् ॥२५२॥ द्व्यक्षरः

3532 सास्य संहारवेलेव दलयन्ती क्षमाभृतः।
नासह्यतासुरैः सेना बाहुशालिभिरप्यलम् ॥२५३॥ तिलकम्

3533 येनारिनारी विदधे न विभ्रमदशोचिता।
यस्य सेना दिशो दैत्यानविभ्रमदशोचिता ॥२५४॥

## हरस्य युद्धवर्णनम्

3534 त्रिविधस्यापि हर्ताथ स ध्वान्तस्य गरीयसः।
सङ्ग्रामगगने भास्वान् तेजसातिदुरुत्सहः[1] ॥२५५॥

3535 *दशाशादेशदादेशः शशिदंशदशाशिदोः।
देशी शंददशूदैदुदंशुशशिदः शदी ॥२५६॥ द्व्यक्षरः। तिलकम्

3536 तेन सङ्कटे [2]सार्धं तत्सेनायुगपद्धतीः।
विवर्तयन् कालकेतुः कालचक्रवदन्यतः ॥२५६॥

---

*भूयेयः अभययायीभ्य भूयो यः अभीभयः अभयम्।
यया अभिभूय भूयः अयं भाभः अभीयाय भाययन् ॥ इति च्छेदः। २५२
भूयेयः भूयः अभययायीभ्यः ( इभ्यः स्वामी इभमर्हतीति इभ्यः दण्डादिभ्यो यः ) अभीभयः अभयम् भाभः यया अयं हरः भूयः अभिभूय भाययन् इयाय इत्यन्वयः।

१. C रुरुत्सहः।

*दशाशादेशदादेशः शशिदंशदशाशिदोः।
देशी शंददत् आशु उदैत् उदंशुशशिदः शदी ॥ इति च्छेदः। २५६
दशाशादेशदादेशः शशिदंशदशाशिदोः देशी शंददत् उदंशुशशिदः शदी सः हरः सङ्ग्रामनभसि आशु उदैत् इत्यन्वयः।

२. C सार्थं for सार्धं।

3537 पिदधुर्मार्गणास्तस्य तमीशं काञ्चनोचिताः ।
छायया न व्यधुर्व्योम्नि तमीशङ्कां च नो चिताः ॥२५८॥

3538 दधता शून्यतां शश्वत् सैन्येन प्रतियोगिनाम् ।
असङ्गरवियातेन तस्य नाकतलायितम् ॥२५९॥

3539 शरवृष्टिं द्विषः प्राप्तां स विषेहे तु तामितः ।
श्यामलत्वं दधत्कण्ठे सविषे हेतुतामितः ॥२६०॥

3540 स्फुरन्मौर्वीतडिद्दण्डस्तत्कोदण्डघनाघनः ।
[1]सपृषत्कः प्रणादेन राजहंसानविव्यथत् ॥२६१॥

3541 *नग्नानुगेनानूनाग्निगुना नेनानुगानिना ।
नूनं नागान्नगेनेन गगनं गां नगानगान् ॥२६२॥　　द्व्यक्षरः

3542 शरैः पूरयता गुप्ता विभुना हरिवाहिनी ।
व्यश्नुवाना दिशः सर्वास्तरसैत्य सुकेतुना ॥२६३॥

3543 समारणे समग्रासेऽसमग्रासेऽसमा रणे ।
सुरारिणा समानेभासमाने भासुरारिणा ॥२६४॥　　तिलकम्

3544 ससङ्गराङ्गने भङ्गपराचीनमतङ्गजे ।
अनङ्गकेतुनारब्धसुरमङ्गलगीतिना ॥२६५॥

---

१. C सपृषट्कः ।

*नग्नानुगेन अनूनाग्निगुना अनेन अनुगानिना ।
नूनं न अगात् नगेनेन गगनं गां नगानगान् ॥ इति च्छेदः । २६२

अनेन नग्नानुगेन अनूनाग्निगुना अनुगानिना नगेनेन गगनं गां नगानगान् न अगात् इति न इत्यन्वयः ।

3545　*नादिनादीननोदेन निदानोनेन नादिना ।
नादि[1] नादौ न नुनुदे नूनं नानौदनादिना ॥२६६॥

3546　तेनानायि प्रतिस्रोतः शरौघैस्तिमिराशिभिः ।
वाहिनी विस्फुरत्कूलकुञ्जराजिः[2] सुपर्वणः ॥२६७॥

3547　जघान च विनिघ्नं तं विनिघ्नन्तं स भासुरम् ।
सभासु रञ्जयन्नाकं जयन्नाकम्पिविग्रहम् ॥२६८॥

3548　दुर्गसालमिवारातिं सच्छेदक्रमशीर्षकम् ।
कुर्वंस्तस्य भटान् संख्ये [3]जवादापतितोऽथ सः ॥२६९॥

3549　*जुजूरे राजराजाजिरोरुजार्जिरुजो रुजन् ।
रराजाजो [4]रुरूर्जाजूरोजोऽरे[5] रुरुार्जिजत् ॥२७०॥

युग्मम् । द्व्यक्षरः

3550　तत्सेनायाः प्रहरणैश्चेतोहारि सुरद्रुहाम् ।
रणं तदासीत्कृतिभिः परीतं रतसन्निभम् ॥२७१॥

---

*नादिनादीननोदेन निदानोनेन नादिना ।
नादि नादौ न नुनुदे नूनं नानौदनादिना ॥ इति च्छेदः । २६६

नानौदनादिना आरब्धमंगलगीतिना अनंगकेतुना अदीनोदेन निदानोनेन नादिना आदौ सः सुकेतुः ना न नुनुदे इति न इत्यन्वयः ।

१. C नाने for नादौ ।

२. C कुञ्जराभिः ।　　३. C जवादापपतोऽथ सः ।

*जुजूरे राजराजाजि रोरुजार्जिरुजः रुजन् ।
रराज आजः रुरूर्जाजूरः अजः अरेः उरुः आर्जिजत् ॥ इति च्छेदः । २७०

राजराजाजिरोरुजार्जिरुजः रुरूर्जाजूर अजः सः हरः-अरेः ओजः आर्जिजत् । रुजन् रराज । तस्य दैत्यस्य भटान् जुजूरे जघान इत्यन्वयः ।

४. C रुरूजाजू ।　　५. C रोजरोरू ।

3551 निर्यान्त्या ज्वालया हेतेः स भयानकयाश्रितः ।
दिवौकसां द्विषद्भीत्या सभया न कयाश्रितः ॥२७२॥

3552 प्रत्यस्त्रशस्त्रसंदोहयोधी योधाभिनन्दितः ।
शिक्षाविशेषमक्षुण्णं दर्शयन्नाहवाङ्गने ॥२७३॥

3553 *हारिहाराहिरंहोहिराहो रंहोरिहा हरेः ।
हरो हरहराराहो रोरुहोरुरुहोऽहही ॥७२४॥ तिलकम् । द्व्यक्षरः

3554 तदा क्रूरबलोपेतं रराज भटमण्डलम् ।
युधि शौर्योचितां बिभ्रल्लक्ष्मीं वृष्णिकुलोपमाम् ॥२७५॥

3555 समदानगजामर्दी समदा [1]नगजामतः ।
वैरिराजपरामर्शी स रराज परामयः[2] ॥२७६॥ तुणीबन्धः

3556 उत्सृज्य समरं सार्धमभिमानेन दानवाः ।
भ्रमान्तो दिक्षु भूयस्त्वाद्‌थकाञ्चनभूभृतः ॥२७७॥

3557 *दुर्दारदोर्द्रूदरदुद्रू रोदाररदीरदाः ।
दुद्दारिरोदरा रुद्रदराददर्दिरे दरीः ॥२७८॥ युग्मम् । द्व्यक्षरः

---

*हारिहाराहिः अंहोहिः आहो रंहोरिहा हरेः ।
हरो हरहराराहो रोरुहोरुरुहः अहही ॥ इति च्छेदः । २७४

हारिहाराहिः अंहोहिराहो हरेः रंहोरिहा आरि । हरहराराहो रोरुहोरुरुहः अहहि । इत्यन्वयः ।

१. C न गजा ततः । २. C पराजत for परामयः ।

*दुर्दारदोर्द्रूदरदुत् उरोदाररदीरदाः ।
दुद्दारिरोदरा रुद्रदरात् आदर्दिरे दरीः ॥ इति च्छेदः । २७८

दुर्दारदोर्द्रूदरदुत्र दुद्दारिरोदरा उरोदाररदीरदाः रुद्रदरात् दरीः आदर्दिरे । इत्यन्वयः ।

3558 अवामदक्षिणस्थेन [1]ललाटतटवर्तिना ।
विद्विषोऽक्ष्णा दहन्नारात्स्यन्दनेन रथो भ्रमन् ॥२७९॥

3559 सकैटभारौ तत्राजिलालसः सवसौ तदा ।
वलिभौमोऽर्कसच्छायः स[2] कैलासवदावभौ ॥२८०॥
युगलकम् । समञ्जसबन्धो गूढचतुर्थः

3560 संवर्तकघटाघोरघर्घरोर्जितगर्जितैः ।
कृते तदानीं सङ्ग्रामे सहसा दानवाधिपैः ॥२८१॥

3561 सा गणापक्षये क्ष्मा च स्थावराविरताततिभीः ।
भीतिताररविरावस्था चक्ष्माये क्षपणागसा ॥२८२॥
अनुलोमप्रतिलोमार्धः । युग्मम्

3562 सुरवैरिचमूं श्लिष्यन् विधूमाश्लेषशोभिना ।
लोचनज्वलनेनाराद्वपुषा च विराजितः ॥२८३॥

3563 *युधि येयायुधीयायां ध्येयाध्येयो धियाधिधूः ।
योधाधायो धयो योध्यं धाय्याधेयोऽययूयुधत् ॥२८४॥ द्व्यक्षरः

3564 स मार्गमर्गलादण्डो जयद्वारस्य विद्विषाम् ।
अवाप्तशलभच्छायं शरैश्चक्रे विहायसः ॥२८५॥ तिलकम्

3565 तस्मिन् कुर्वति तान्वैरिनक्रेऽङ्कारोपितापदः ।
योधैस्तद्धनुषः सेहे न क्रेंङ्कारोऽपि तापदः ॥२८६॥

---

१. C कवाटतटवर्तिना for ललाटतटवर्तिना ।　　२. B सकैलास इवावभौ ।

*युधि येयायुधीयायां ध्येयाध्येयः धियाधिधूः ।
योधाधायी धयो योध्यं धाय्याधेयः अध्ययूयुधत् ॥ इति च्छेदः । २८४

विधु + उमा + आश्लेषशोभिना लोचनज्वलनेन वपुषा विराजितः सः आयुधीयायां ध्येयाध्येयः धियाधिधूः योधाधायी धयः धाय्याधेयः यः युधि योध्यं अध्ययूयुधत् इत्यन्वयः ।

3566 संप्रहारतलोर्व्यां च सुभटं सुरविद्विषः ।
[1]नित्ये न तरसा योगं भूमिवर्धनतां गतम् ॥२८७॥

3567 *कया कुकाकुकायायकाकीकाकाकौककाकया ।
कुकैकैकिकया कं यः काकी काकोऽकाकया ॥२८८॥

द्व्यक्षरः । युवपादयमकञ्च

3568 प्रणतं स विभुः शत्रुमुत्ससर्जाकुलं रणे ।
[2]हिमवानिव सन्नागविदारीरचितस्थितिः ॥२८९॥ तिलकम्

3569 *[3]सासा सासु पिपासासी सोऽपिपासः सपापसूः ।
सपंसासोऽसिपापासी सोपासः स पपौ सुपात् ॥२९०॥ द्व्यक्षरः

3570 सत्पुङ्खदृढमुष्टित्वं दधद्भिर्मार्गणासिभिः ।
विभिन्नच्छिन्नहृत्कण्ठाश्चक्रिरे तद्भटैर्भटाः ॥२९१॥

3571 कृतकामोऽथ [4]गोभर्ता सव्यूढकमलासनः ।
भूतिधाम परं भेजे शंभुः शंभुरिवापरः ॥२९२॥ अर्थत्रयवाची

---

१. B निन्ये for नित्ये ।

*कया कुकाकुकायायकाकीकाकैककाकया ।
कुकेकेकिकया कं यः काकी काकः अककाकया ॥ इति च्छेदः । २८८

कया कु-काकु-काय-अय-काकी-काकौक-काकया कुकेकिकया काकी अककाकया काकः''''इत्यन्वयः ।

२. C हिमवान्निवसन्नाघ ।

*सासासासु पिपासासी सः अपिपासः सपापसूः ।
सपंसासः-असिपापासी सोपासः स पपौ सुपात् ॥ इति च्छेदः । २९०

सासासासुपिपासासी सः (स्यतीति सः) अपिपासः सपापसूः संपसासः असिपापासी सोपासः सुपात् सः पपौ स्वसैन्यं ररक्ष इत्यन्वयः ।

३. C सासोसासुयियासीसीसोयियासः स यायसूः ।

४. B गोर्भवती for गोभती ।

3572 धत्ते मनोभवाकारं करं यः शम्बराजितम् ।
क्षोभितो भुवनापाये वीचिमानिव दुर्धरः ॥२६३॥

3573 *सवसासवसेवासु सासावासासु सौववान् ।
सुवासोऽसः सवासेवी वासवः सवसावसौ ॥२६४॥ द्व्यक्षरः

3574 वरूथिनीषु समरे दैत्यराजक्ष्माभृताम् ।
वज्राहतिभिरत्युच्चैः शौर्यशृङ्गाण्यशातयत् ॥२६५॥ तिलकम्

3575 ननृते सुतरां मूर्त्या कावन्ध्यासमरेचकैः ।
शरश्रेणिर्विचकरे का वन्ध्या समरे च कैः ॥२६६॥

3576 तदा जिन इव स्पष्टवज्रासनरुचिर्मृधे ।
क्षमाधरगुरुर्दैत्यस्कन्धमाराज्जिगाय सः ॥२६७॥

3577 दधुषी जघनं प्राप्तं काञ्चीरवसनाथताम् ।
यस्यारिस्त्री दशां नाप कांचीरवसनाथ ताम् ॥२६८॥

3578 सिसङ्ग्रामयिषुस्तेन दष्टदन्तच्छदः क्रुधा ।
[1]अभ्यैदभ्यागमारम्भसंरम्भादशनिप्रभः ॥२६९॥ युग्मम्

3579 शौर्यानलशिखाजाले कौशिकस्य हताहिनि ।
निपेते तेन [2]निर्मृष्टसारतातापनिर्मृधम् ॥३००॥ शरबन्धः

3580 सुकेतोरथ संग्रामे करालकुटिलभ्रुवः ।
पृतना भूरिभूरेणुधूसरापि स्फुरत्त्यलम् ॥३०१॥

---

*सवासवसेवासु सासावासासुसौववान् ।
सुवासोऽसः सवासेवी वासवः सवसौ असौ ॥ इति च्छेदः । २६४

सासावासासु सवासवसेवासु सौववान् सुवासोऽसः सवासेवी शौर्यशृङ्गाणि अशातयत् इत्यन्वयः ।

१. C अभ्यर्दंत्यागमारम्भः । २. C तेन निदृष्ट ।

3581 *नुन्ननानाघनौघेन निघानघनाघनाः ।
घनाघनेन नाघानि नाघ्नाना नुन्ननिघ्ननौः ॥३०२॥ द्व्यक्षरः

3582 ललाटतटगां दृष्टिं धूर्जटेरनुकुर्वती ।
सदानलक्ष्मा शुशुभे तत्कुञ्जरघटा रणे ॥३०३॥

3583 संप्रहारे स पर्यस्तनानाशस्त्रबहुलोहितम् ।
व्यधादतनुसंरम्भो नानाशं बहुलोऽहितम् ॥३०४॥

3584 कपर्दीवासुरामर्दी स हालाहलविभ्रमः ।
तदा सञ्जघटे सार्धं सीरपाणिः सुकेतुना ॥३०५॥

3585 विभ्रद्वपुः सरकौघविस्रं सीरक्षतोऽदयम् ।
तेनाकारि स नागांसविस्रंसी रक्षतोदयम् ॥३०६॥

3586 [1]वराहलीलाञ्छितया श्रिया हरिरिवाश्रितः ।
पुष्पवर्षैः क्रियास्तन्वन् समभाव्यत खेचरैः ॥३०७॥ गूढकर्तृकः

3587 यस्याम्भः प्रणतो नैव नरके सरितामधात् ।
विभिन्नदैत्यां यश्चैको नरकेसरितामधात् ॥३०८॥

3588 आपूर्य दशनज्योत्स्नासविशेषविपाण्डुरम् ।
पाञ्चजन्यं रवाध्मात-ब्रह्मस्तम्बान्तरं रणे ॥३०९॥

---

*नुन्ननानाघनौघेन निघानघनाघनाः ।
घनाघनेन नाघानि नाघ्नाना नुन्ननिघ्ननौः ॥ इति च्छेदः । ३०२

नुन्नानानाघनौघेन निघानघनाघनाः आघ्नाना नुन्ननिघ्ननौः घनाघनेन नाघानि न ? अपि तु हतैव ।

१. B हलीति कर्ता ।

3589 *[1]सकाककीकसाकेऽसौ कौकसैकोऽकुकाकुसूः ।
सकासूकैः स कंसासी साकं सासासिकोऽकसत् ॥३१०॥

तिलकम् । द्व्यक्षरः

3590 [2]अकृतारिकुलक्षोभा लम्बना एव वाहवः ।
इत्यवेत्य व्यधत्तासौ रणेऽरिकदनं महत् ॥३११॥

3591 दोष्णि दर्पं ददौ पीने कंसहा यमतोरणे ।
द्विपो [3]हन्तुमपैक्षिष्ट कं सहायमतो रणे ॥३१२॥

3592 [4]शिरोभिरमरारीणां नाराचच्छिन्नकंधरैः ।
निपेतवद्भिस्तस्याजौ शौर्यद्रुमफलायितम् ॥३१३॥

3593 स शरान् दिक्षु चिक्षेप सचक्रोऽष्टासु रक्षिता ।
[5]द्विषन्नवेदि तेनाथ स च क्रोष्टासुरक्षिता ॥३१४॥

3594 व्यापारयन् ससंरम्भं स नन्दकपरश्वधम् ।
सङ्ग्रामकानने सेनां सुरारेः पक्षशोभिनीम् ॥३१५॥

---

*सकाकसीकसाकेऽसौ कौकसंकोऽकुकाकुसूः ।
सकासूकैः स कंसासी साकं सासासिकः अकसुत् ॥ इति च्छेदः । ३१०

कौकसैकः अकुकाकुसूः कंसासी सासासिकः असौ स-कांसूकैः सकाकसीकसाके अकसुत् इत्यन्वयः ।

१. B, C सकाकाकीकसाकासौ for सकाकाकीकसाकेऽसौ ।

२. B अकृतारिकुलक्षोभा । B, C fill the lank in the second line इत्यवेत्य ।

३. C हतुं for हन्तुम् ।

४. B, C शिरोभिरमरारीणाम् ।

५. C द्विषन्नवचितेनाथ for द्विषन्नवेदतेनाथ ।

3595 *वल्लवो वालिलीलैला वल्लीलावो वलावलिम् ।
[1]लुलाव लीवो लोलवां (लोलवांल्लीवो) ल्लवलीं वोलललोलुवः ॥३१६॥

द्व्यक्षरः

3596 कौस्तुभाम्भोरुहं वक्षः सरसि द्योतकेसरम् ।
दधल्लक्ष्मीनिवासैकरागेणेव विपाटलम् ॥३१७॥

3597 *दिदेवादिविदुद्दैवो दवदेव ददद्दिवम् ।
वेदवादविदां विद्वदावेदी देवदीदिविः[2] ॥३१८॥

3598 तत्सङ्ग्राम-सदस्याराद्गान्धर्वं च कलेवरम् ।
[3]धृष्टमासाद्य तरसा काकी वैरस्यमानयत् ॥३१९॥

3599 बद्धकक्ष्यो हरिर्भास्वदाननो दीनतारणे ।
जहावरिचमूर्नाशदाननोदी [4]नता रणे ॥३२०॥

---

*वल्लवो वालिलीलैला वल्लीलावो वलावलिम् ।
लुलाव लीवः लोलवाँल्लवलीं वा उललोलुवः ॥ इति च्छेदः । ३१६

वल्लवः वल्लीलावः वालिलीलैलालीवः लोलवान् वा (उपमायां) उललोलुवः सः संरम्भं नन्दकपरश्वधं व्यापारयन् सङ्ग्रामकानने सुरारेः पत्रशोभिनीं सेनांवलावलिं लवलीमिव लुलाव इत्यन्वयः ।

१. B, C ललोवांल्लवलीवाललोलवः ।

*दिदेव आदिवित् उद्दैवः दवदेव ददत् दिवम् ।
वेदवादविदां विद्वदावेदी देवदीदिवि ॥ इति च्छेदः । ३१८

द्योतकेसरं कौस्तुभाम्भोरुहं दधत् आदिवित् उद्दैवः वेदवादविदां दवदेव दिवम् ददत् विद्वदावेदी देवदीदिविः दिदेव इत्यन्वयः ।

२. देवदीदिव for देवदीदिविः ।

३. C पृष्टमासाद्य for धृष्टमासाद्य ।

४. C तता रणे for नता रणे ।

3600　समत्सरो विधायासावास्थामनधिकस्वनौ ।
[1]युयुत्सू संयुगे तारसुतारावधिपौ द्विषाम् ॥३२१॥

3601　*भूभावाभावभीभावावुभौ भौवावबीभवत् ।
भावीव विभवावेव भावे वा वैभवे भवन् ॥३२२॥　द्व्यक्षरः । युग्मम्

3602　सङ्ग्रामस्तस्य ताभ्याञ्च [2]साधं स शरदुर्दिनः ।
पर्यायविजयोत्फुल्लनेत्रदेवासुरोऽभवत् ॥३२३॥

3603　दधतो पौरुषच्छायामम्पृषातान्तदोर्जितौ ।
तौ युध्यमानौ तेनालममृषातां तदोर्जितौ ॥३२४॥

3604　[3]तयोरुरूरुनिष्पेषान्मधुकैटभयोरिव ।
पतत्त्रिकेतनं तुष्टा तुष्टाव सुरसंहतिः ॥३२५॥

3605　तद्वरूथवर्तीं कोपात् विपदन्तकरः सताम् ।
जघानासिलतालूनद्विपदन्तकरः स ताम् ॥३२६॥

3606　तत्सङ्ग्रामे ससंरम्भाः सुरस्त्रीभिर्विलोकिताः ।
मृताः स्वर्गामिनोऽभूवन् सजीवाश्चोभये भटाः ॥३२७॥

---

१. B आयुत्सू for युयुत्सू ।

*भूभावाभावभीभावौ उभौ भौवौ अबीभवत् ।
भावी इव विभवावेव भावे वा वैभवे भवन् ॥ इति च्छेदः । ३२२

असौ भावी हरिः वैभवे भावे भवन् आस्थां जयाशां विधाय योद्धुमिच्छू उभौ विभवौ समरे निहनिष्यमाणत्वात् संसाररहितावेव भौवौ तार-सुताराख्यौ दैत्यपती अबीभवत् भावयामासेत्यन्वयः ।

२. C साधं च for साधं स ।

३. B, C तयोर्गुरु for तयोरुरू ।

3607 *[1]साभासासु सभासांसः साभीभासु स सौभभित् ।
साभः सभासु भूभासी सासिभाः सु सभासु भान् ।।३२८।।

द्व्यक्षरः । युग्मम्

3608 अस्तूयत सुरैः संख्ये सञ्चरिष्णुरनर्गलम् ।
संवादिलक्षणग्रन्थः सकृत्तद्धिततां दधत् ।।३२९।।

3609 अभ्रष्टः संयुगेऽरीणामपाययतनानदः ।
रक्षःकुलं स रक्तौघमपाययत नाददः ।।३३०।।

3610 दलयन् पृतना शत्रो रुषाक्रान्तमना मृधे ।
अवार्यवीर्यातिशयः सोऽनिरुद्धस्तदाभवत् ।।३३१।।

3611 तेन चक्राभिघातेन निघ्नतारेर्विनिघ्नता ।
कृता नानाहवकृता साध्वसंश्रितसाध्वसम् ।।३३२।।

3612 स्थगिताकाशदिक्चक्रः स महान्तैः शरैर्द्विषाम् ।
शिरांसि पीवरच्छेदस्कन्धचक्राण्यजीहरत् ।।३३३।। अपशब्दाभासः

3613 कावेकोऽवी कविः कंवः केकिवैकोऽकुकाकुवाक् ।
कविकाकुकचोऽवीकावाविकं वाविवेकवत् ।।३३४।। द्व्यक्षरः

3614 स निहत्य ततो [2]दैत्यो युध्यमानावसंभ्रमम् ।
चचार प्रलयोष्णांशु दुर्निरीक्ष्यवपू रणे ।।३३५।। युग्मम्

---

१. C सभासासु ।

*साभासासु सभासांसः सामीभासु स सौभभित् ।
साभः सभासु भूभासी सासिभाःसु सभासु भान् ।। इति च्छेदः । ३२८

सभासांसः सौभभित् साभः सभासु भूभासी सासिभाःसु भान् साभीभासु साभासासु सभासु संवादिलक्षणग्रन्थः सकृत् तद्धिततां दधत् अनर्गलम् संचरिष्णुः संख्ये सुरैः अस्तूयत इत्यन्वयः ।

२. B दैत्यौ for दैत्यो ।

3615 शुशुभे तेन सक्तेन मानिना यमताकृतौ ।
तत्र दृष्टिं जनः प्रीतिमानिनाय मताकृतौ ॥३३६॥

3616 अथ व्युत्थानसंस्कारः संस्कारानिव योगजान् ।
बबाधे विबुधान् दर्पात्कालान्तकमहासुरः ॥३३७॥

3617 निजघानोर्जितैर्बाणैः रजस्तमसितोऽत्रिणा ।
स्तुतः सोऽप्यमुना नुन्नो रजस्तमसि तोत्रिणा ॥३३८॥

3618 समवर्तिपुरद्वारपरिघं मुद्गरं जवात् ।
[1]उद्गूर्य [2]तमुभाहस्ति हस्ती [3]हन्तुमथाभ्यगात् ॥३३९॥

3619 अभग्नप्रसरोद्दामतरसादी प्रतापिभिः ।
सैनिकैः स जघानामुं तरसा दीप्रतापिभिः ॥३४०॥

3620 अभाजिनायकेनारेः प्रतिकर्मकृतस्थितिः ।
वेश्येव दधती सेना स्फुटकैतवसारताम् ॥३४१॥

3621 [4]सोऽवैत्क्षतिं द्विषां तस्मिन्न वाचामन्तिके स्थिताम् ।
प्राप्तं योधं शिवौघाः स्म न वाचामन्ति केऽस्थिताम् ॥३४२॥

3622 तेजस्विमण्डलस्यारात् कुर्वन्नन्तर्धिमाहवे ।
अभ्रङ्कषवपुः श्रीमान् स तदास्ताचलोऽभवत् ॥३४३॥

3623 बिभ्रतः सांयुगीमुच्चैरपरे धुरमत्रताम् ।
प्राप्ताः प्रभुभ्यः किं कीर्तेरपरेधुरमत्रताम् ॥३४४॥

3624 कृतान्तनगरीसालवलयं चकितं धनुः ।
दधत्तेनाथ युयुधे ज्वालावह्नि समत्सरम् ॥३४५॥

---

१. B उदीर्य ।　　२. B तस्माहस्ति ।　　३. B कर्तुं for हन्तुं ।

४ B mentions that श्लोकद्वयं प्रागुक्तम् ।

3625 निर्धौतकनकच्छायाः सच्छदाः शीघ्रगामिनः ।
तार्क्ष्येण सदृशास्तस्य सायका रेजिरे रणे ॥३४६॥ निरोष्ठ्यः

3626 बभौ तस्य द्विषः सेना निघ्नती व्रश्चनादिभिः ।
सैन्यैः स जनितामर्षनिघ्नतीव्रश्च नादिभिः ॥३४७॥

3627 सप्तलोकोपसंहारः दृष्टसारः सुरासुरैः ।
समरे युध्यमानोऽसौ नालिङ्ग्यत जयश्रिया ॥३४८॥

3628 कुकुदी दकदूदोऽकोऽकूदकौकाः कदैकक: ।
केकादकेकिकेऽदूक-कुककाकादिकेऽकुकुत् ।।३४६॥ द्व्यक्षरः

3629 सपुरस्कारमक्षुण्णप्रसरं समराङ्गने ।
साडम्बरमरेः सैन्यं हास्तिकं च खगाधिपः ॥३५०॥

3630 विनिहत्य मदापानचञ्चुरभ्रमरं जयत् ।
पतत्त्रच्छायया तीक्ष्णचञ्चुरभ्रमरक्षयत् ॥३५१॥ तिलकम्

3631 कृतापदानः सङ्ग्रामसीम्नि दोर्दर्पतो भटः ।
उदात्ततामेव दधत् केवलां स्वरितोऽभवत् ॥३५२॥

3632 स्थितोऽरिर्यस्य वेषेण कुशचीवरतापि ना ।
जग्ले च हरिणाक्रन्दकुशचीवरतापिना ॥३५३॥

3633 स्फूर्जावतायं सङ्ग्रामे येनावल्गि निरर्गलम् ।
वज्रकेतुमसौ दर्पादर्पितातनुसंभ्रमम् ॥३५४॥

3634 *ममारिमारी रामोरुरंरमो मर्मरे मरौ ।
मुरारिरमुमारामी रुरुमारममीमरत् ॥३५५॥ द्व्यक्षरः । युग्मम्

---

*ममारिमारो रामोरुरंरमः मर्मरे मरौ ।
मुरारिः अमुं आरामी रुरुमारम् अमीमरत् ।। इति च्छेदः । ३५५
अमुं वज्रकेतुं ममारिमारी रामोरुरंरमः आरामी मुरारिः मर्मरे मरौ रुरुमारम् अमीमरत् इत्यन्वयः ।

3635 अनेकपापहरणे व्यग्रः सपदि विद्विषाम् ।
प्रणतानां च विश्लिष्टभवचारकपञ्जरः ॥३५६॥

3636 स कर्ताप्सरसं संख्ये सज्जहातिस्मरक्षताम् ।
सजीवं किं द्विषां सैन्यं सज्जहाति स्म रक्षताम् ॥३५७॥

3637 दैत्याधिपैः सुतीक्ष्णैश्च मेघाभैर्दृढमुष्टिभिः ।
निस्त्रिंशैर्बाध्यमानोऽपि न चकम्पे स्थिरस्थितिः ॥३५८॥ तिलकम्

3638 स दावैरिव धेनूनां सेनानां ज्वलितैः शरैः ।
सदा वैरिवधेऽनूनां शक्तिं बिभ्रत् भयं ददौ ॥१५६॥ अयुग्मयमकम्

3639 तदैवासुरयोधानां हतशेषत्वमीयुषाम् ।
चक्रे हृदि पदं नो भीः कुर्वतामभयाञ्जलिम् ॥३६०॥

3640 *यदाययायी युद्धोऽयं देयदायी दियं ददत् ।
यदुदायादयादोदुदुदयाय दयां ययौ ॥३६१॥ द्व्यक्षरः । युग्मम्

3641 आमोदधामभिस्तस्य सुमनोभिः कृतिस्थितिः ।
कबन्धयोग्या शुशुभे नवशेषा रणक्षितिः ॥३६२॥

3642 द्विषो रणेऽपरामृष्टः स ततक्ष त्रियामया ।
रामस्येव क्रियास्यासीत् सततक्षस्त्रियामया ॥३६३॥

3643 भर्तुः सम्प्रतिपत्तीनां स्मरंश्चिरमविक्लवः ।
सांयुगीं सहसा योद्धुं नैव तत्र कुमारकः ॥३६४॥

गूढक्रियाकर्मकर्तृकः

---

*यदा अययायी युद्धः अयं देयदायी दियं ददत् ।
यदु-दायाद-यादो-दुत् उदयाय दयां ययौ ॥ इति च्छेदः । ३६१

अययायी युद्धः देयदायी दियं ददत् यदु-दायाद-यादोदुत् उदयाय (विजयार्थम्) अयं देवः यदा दयां ययौ तदैव भीः असुरयोधानां हृदि पदं न चक्रे ? इत्यन्वयः ।

3644 तेनाहतानां सङ्ग्रामेऽनवमेधासि तैरसौ ।
क्रव्यकूटः क्षपाटैस्तु नवमेधासितैरसौ ॥३६५॥

3645 पश्यतो युधि तद्रंहो गरुडानिलभास्वताम् ।
मन्थरत्वं गतेस्तत्र कस्य चेतसि नास्फुरत् ? ॥३६६॥

3646 रणभूमिषु दैत्यानां सचमूकासु रङ्गताम् ।
जहार पौरुषच्छायां स च मूकासुरं गताम् ॥३६७॥

3647 तारकाख्यं स सङ्ग्रामे शितशल्यैः शिलीमुखैः ।
पुञ्जीकृत इवाशेषलोकसंवर्तपावकः ॥३६८॥

3648 *यशः शय्याशयः शंयुः शशीशाशयशाय्यशान् ।
ययुयाय्याशया शं शंयेयोऽशायाय्यशाययत् ॥३६९॥

द्व्यक्षरः । युग्मम्

3649 स कालदमनस्याथ युधि निघ्नन् वरूथिनीः ।
दधत् ध्रुवमिव भ्रेजे चक्रं भ्रमिततारकम् ॥३७०॥

3650 तं सुराण्डजवीतंसं वीतं सम्पदमुज्ज्वलाम् ।
निजघान च विध्यन्तं विध्यन्तं च जगाम सः ॥३७१॥

3651 स कृशानुरिवोद्दीप्तः प्रभञ्जनसहायताम् ।
दधच्छक्तिं ज्वलद्धेतिं दितिजानीककानने ॥३७२॥

3652 पिप्पोदपादीं दीपोऽपि पादादौ दददापदम् ।
दिदीपे पददोऽपादिपादपं दुददीदिपत् ॥३७३॥ द्व्यक्षरः । युग्मम्

---

*यशः शय्याशयः शंयुः शशीशाशयशाय्यशान् ।
य-युयाय्याशया शं शंयेयः आशायाय्यी अशाययत् ॥ इति च्छेदः । ३६९

यशः शय्याशयः शंयुः शशीशा-आशये-शयी अशान् ययुयायी आशयाशंशंयेयः आशायायीं सः हरः तारकाख्यमसुरं शनैः अशाययत् दीर्घनिद्रां चकार इत्यन्वयः ।

3653 वर्णस्थितिमतीमर्थ्यां दधद्रुचिरभास्वराम् ।
गिरं च पादपच्छायां श्रियश्च चतुरस्रताम् ॥३७४॥

3654 समानानि समानानि स संयति ससंसयति ।
सदाहानि सदाहानिपलानि चपलानि च ॥३७५॥ आवलिबन्धः

3655 प्रगल्भं वल्गमानानि भुजदर्पादतर्पयत् ।
निकृत्तारातिकण्ठोत्थै रक्षांसि क्षतजासवैः ॥३७६॥ तिलकम्

3656 उत्सृज्य वक्षःश्रीर्यस्य न परा चिकुरं गता ।
द्विषामासीद्रणात्तस्मिन् अपराचि कुरङ्गता ॥३७७॥

3657 स भिन्दन् द्विषतः सेनाः सपत्राकृतवारणैः ।
रणाजिरोर्वीमखिलामसृजोच्छालता गिरौ ॥३७८॥

3658 पीलूपलाल्पपालीपे लोलालापालिपिप्पले ।
पाली पापोलपालोपी लोलापी लोलुपोऽलिपत् ॥३७९॥
तिलकम् । द्व्यक्षरः

3659 तार्क्ष्यपक्षानलव्यस्त-सरत्नशिखरोत्करम् ।
सम्प्रहार-रसाध्मातपादातोन्मूलितद्रुमम् ॥३८०॥

3660 स व्यधत्त तथादीर्घसूत्रस्तमगमन्यथा ।
तत्तटीः खेचरास्त्यक्त्वा सूत्रस्तमगमन्यथा ॥३८१॥ युग्मम्

3661 कृतहेमोज्ज्वलच्छायपत्त्रभङ्गान् सुपर्वणः ।
सोऽकिरद्दधतो बाणान् मयदानवविभ्रमम् ॥३८२॥

3662 शरीरीशोऽशरीराशीरंशोऽशः शिशिरांशुरुक् ।
शारैराशाः शरैराश शूरश्रीशः शरारुशः ॥३८३॥ द्व्यक्षरः

3663 अङ्गे वृद्धिगुणाश्लिष्टा धातवः प्रत्ययैरिव ।
रूपाभिव्यक्तिमन्वीता विवव्रुरसुरैः सुराः ॥३८४॥

3664 इति भटभ्रूकुटीनां कोपनी यापनीया
कृतिभिरुदसिधारावारिमत्तारिमत्ता ।
द्युयुवतिरतरत्ना भोगसारागसारा-
दजनि समरसम्पत्सासुराणां सुराणाम् ॥३८५॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये चित्रयुद्धवर्णनोद्घातो नाम त्रयश्चत्वारिंशः सर्गः ।

---

## चतुश्चत्वारिंशः सर्गः

3665 तेषां क्रियाफलवतां रणमूर्ध्नि सिद्धि-
मावाञ्छतामथ निरर्गलचेष्टितानाम् ।
उत्तस्थुरप्रतिमतत्प्रतिबन्धहेतु-
[1]भूता विनायकगणा इव मत्तनागाः ॥१॥

3666 योधं निहन्तुमरिमुत्पतितं विषाण-
दण्डप्रतिष्ठचरणं करिणः सखड्गम् ।
आनर्च सिद्धजनतोत्पलदामचक्रै-
र्दीर्घोत्कटैः सुरवधूश्च कटाक्षमोक्षैः[2] ॥२॥

3667 आदीपिता कुलिश-कर्कश-[3]दन्तदण्ड-
सङ्घट्टजेन शिखिनोत्पतता शराली ।
लग्ना दृढं द्विरदकुम्भतटे रराज
दावाग्निसंहतिरिवाञ्जनशैलशृङ्गे ॥३॥

3668 रेजे गजेन्द्र-गुरुसङ्गर-घट्यमान-
दन्ताग्रकोषकटकैः क्षतजोक्षितैः क्ष्मा ।
[4]अप्राप्तवीरकृत-शोककृशामरस्त्री-
वेल्लद्भुजागलित-काञ्चनकम्बुशोभैः ॥४॥

3669 वल्गत्प्रवीर-विनिपातित-खड्गयष्टि-
धारानिकृत्तकरनिर्गतरक्तवर्तिः ।
धातुच्छटारुणित-निर्झरवारिपूर-
सञ्चारलग्न-गिरिविभ्रममाप नागः ॥५॥

---

१. C भूतो for भूता । २. C कटाक्षसङ्कैः ।
३. C omits दन्त । ४. B, C अप्राप्तकान्तशत for अप्राप्तवीरकृत ।

3670 ज्याकृष्टिमण्डलित-कार्मुकमुक्तहेम-
नाराच-राजि-विकरालशिराः करीन्द्रः ।
दध्रे तटान्तरित तिग्मकरोर्ध्वरश्मि-
रेखावकीर्ण-शिखरोदय-शैल-लीलाम् ॥६॥

3671 आघ्रातुमन्यकरिमण्डल-दानगन्ध-
मूर्ध्वीकृतातनुकरार्गल-दण्ड एकः ।
शूरग्रहाय नभसोऽवतरीतुमिच्छो
र्हस्तावलम्बनमदादिव दिव्यनार्याः ॥७॥

3672 तस्तार वारणपतिर्वपुषाजिवर्त्म
विन्ध्यावनीध्र इव जङ्गमतामुपेतः ।
आदीर्घपुष्करकरोन्नतवंशदण्ड-
रन्ध्रोत्थित-प्रचुर-शीकर-नर्मदाम्भाः ॥८॥

3673 वक्षोमणिस्थितिभृतः [1]स्फुटविन्दुकर्प-
[2]पिञ्जूषसन्धिसवलित्रयकण्ठभागाः ।
सत्तलपला वृहदवग्रहताम्रतालु
ह्यर्ल्पपेचकमधुच्छवि दन्तवेष्टाः ॥९॥

3674 आन्नस्तकुक्षिकलविङ्कदृशः सुगन्धि-
निःश्वासबिन्दु-कणकीर्ण-करार्गलाग्राः ।
सस्वस्तिकस्थितिविभक्तविदुप्रतिष्ठ[3]-
कुम्भोत्तमाङ्गपृथुसान्द्रसमुदूगपादाः ॥१०॥

3675 सुस्निग्ध-विन्दु-निचितच्छवयो विभक्त-
निर्याण-दीर्घकर-पुष्कर-वालपुच्छाः ।
शूरा वराहजघनाः परयुग्मरोम-
सान्द्रत्वचो नतनिरायत-सूक्ष्मकेशाः ॥११॥

---

१. B स्फुटविन्दुकर्म for स्फुटविन्दुकर्प ।
२. B पिंजूषः कर्णोपरिभागः (marginal notes) ।
३. B, C'''भक्तविदुप्रकृष्ट for भक्तविदुप्रतिष्ठ ।

3676 भग्नामर-द्विरद-मुत्पल-सप्तपर्ण-
चूतातिमुक्तक-सुगन्धि-शरन्मधूत्थम् ।
संवादितां नयदहर्गणमञ्जनेन
सेनामतङ्गजगणा मुमुचुर्मदाम्भः ॥१२॥　　चक्कलकम्

3677 माणिक्यदीधितिशिखाकपिशप्रकाश-
मायोधने सुभटहस्ततलव्यपास्तम् ।
चक्रं पपात परिणाहिनि नागकुम्भ-
भागेऽस्तशैलशिरसीव सितांशुबिम्बम् ॥१३॥

3678 मातङ्गकर्ण-पवनाहतकुम्भकूट-
सिन्दूर धूलिकपिलस्फुरदभ्रपङ्क्तिः ।
व्यापार्यमाण-करवालनिकृत्तरक्त-
सिक्तश्लथत्वगिव दूरमदृश्यत द्यौः ॥१४॥

3679 अभ्येत्य मत्सरविपाटलदृष्टिवल्ग-
दुल्कालता युयुधिरे [1]कृतमेरुकम्पम् ।
दानाम्बुपात-शमितोन्नत-दन्तदण्ड-
संघट्ट-पावकशिखानिकराः करीन्द्राः ॥१५॥

3680 तारापथं गजपतिः पृथुकर्णताल
निर्धूतकुम्भतट-गैरिक-धूलिदिग्धैः ।
शारीचकार करशीकर-बिन्दुवृन्दैः
संध्यारुणैर्नभ इवोडुगणैः प्रदोषः ॥१६॥

3681 नाराचभिन्न-कटकूट-विमुक्तरक्त-
लाक्षारुण-श्रवणचामर-भूषणोऽन्यः ।
दध्रे दरीमुखविनिर्गतदाववह्नि-
ज्वालाकलाप-विकटाञ्जनशैल-शोभाम् ॥१७॥

---

१. B कृतमेरुकल्पम् for कृतमेरुकम्पम् ।

3682 चक्रुर्गजाः श्रवणतालसमीरधूत-
कुम्भस्थलस्खलितगैरिक-रेणुदिग्धाः ।
सिद्धाङ्गनाकरकुशेशय-[1]कीर्यमाण-
मन्दारकेसरपरागहृता इवाशाः ॥१८॥

3683 सौदामिनीभिरिव खड्गलतावलीभि-
रम्भोधरैरिव गजैः स्फुटपङ्कनीलैः ।
रेजे शिखण्डिभिरिवोच्छ्रितपिच्छ-भार-
शोभाधरैरिषुभिराजिघनर्तुवृत्तिः[2] ॥१९॥

3684 विस्तारि-दन्तपरिघोत्प्लुत-वीरयोध-
भास्वत्कराल-करवाल-विलूनमूलः ।
स्तम्बेरमस्य रणमूर्धनि कालताल-
वृन्तश्रियं निपतितो विदधार कर्णः ॥२०॥

3685 हस्तेन [3]शातशर-कल्पितमुत्तमाङ्ग-
[4]मस्रच्छटारुण-शिरोरुह-पल्लवाङ्कम् ।
नाकप्रवेश-गुरुमङ्गल-रत्नकुम्भ-
मूर्ध्वीचकार मृतवीरजनस्य नागः ॥२१॥

3686 उल्लासि-वीरकरमुक्त-विलोलबर्हि-
शङ्कुद्रुम-स्फुरित-काननचक्रवालम् ।
अस्ताद्रिशृङ्गमिव निष्पतदर्धचन्द्र-
नक्षत्रमालमभवत् करिकुम्भपीठम् ॥२२॥

3687 हस्तार्गलाभिरभितः परिपीवराभि-
रास्फालिता सकृदभूत्सुरकुञ्जराणाम् ।
पातालरन्ध्रपतितेव विधूतधूलि-
जालान्धकारपिहिताखिलदिग्धरित्री ॥२३॥

---

१. B, C शीर्यमाण for कीर्यमाण । २. B····घनर्तुवृष्टिः for घनर्तुवृत्तिः ।
३. B शातकरकल्पित for शातशरकल्पित । ४. B सास्रच्छटा for अस्रच्छटा ।

3688 स्तम्बेरमो दशनकोष-करालरश्मि-
तन्त्रीगुणां शिथिलकुञ्चितपुष्कराग्राम् ।
हस्तार्गलामभृत तूर्यनिनादहृष्ट-
नृत्यत्कबन्ध-समराङ्गन-रङ्गवीणाम् ॥२४॥

3689 आलक्ष्यमाण-विवृतारुण-तालुमूल-
मुत्तम्भिताङ्कुश-निरुद्ध-करालकुम्भम् ।
आघ्रासिषुः प्रतिमतङ्गजदानगन्ध-
मामीलितेक्षणयुगं पृतनागजौघाः ॥२५॥

3690 गण्डस्थलैः श्रवणतालविधूतकुम्भ-
सिन्दूर धूलिपरिपाटलितं मदाम्भः ।
मेघा इव क्षतजमक्षतपक्षदैत्य-
सेनाविनाशपिशुनं ववृषुर्गजेन्द्राः ॥२६॥

3691 सीमन्तितारिभटमण्डलमश्ववार-
मुक्तस्य संश्रितसुवर्णगिरेस्तदानीम् ।
लक्ष्मीभृतः समरमूर्ध्नि हरेरहारि
चेतः क्षणादिव सुदर्शनधारयारात् ॥२७॥

3692 भूमेर्दिवश्च पृथुकुक्षिपुटात्तदानीं
निर्दारिता निशितपत्त्रशरैर्निपेतुः ।
वल्गत्पदाति-करवालविलूयमानाः
स्थूलान्त्रतन्त्य इव काञ्चनकार्मुकज्याः ॥२८॥

3693 नानाशिरस्त्र-विनिपात-विरुग्णखड्ग-
धारारजः कलुषितोष्ण-कर-प्रकाशम् ।
व्यापारिता युधि भियेव गृहीतदिक्क-
मालक्ष्यताम्बरमपि प्रपलायमानम् ॥२९॥

3694 आतेनुषां शिशिरदीधितिधामपाण्डु-
माश्चर्यकर्मठतया प्रमदोद्धतानाम् ।
सङ्ग्रामभूमिरसिपत्रवनावृतापि
नाकोपभोगसुखहेतुरभूद्भटानाम् ॥३०॥

3695 सेनामतङ्गजगणस्य कठोरकुम्भ-
भागास्पदासु रणमङ्गलमालिकासु ।
प्रेङ्खत्पतत्र-मरुतस्तरसा निपेतु-
रेके शिलीमुखगणा अपरे व्युदस्थुः ॥३१॥

3696 छिन्नाः कथञ्चिदधिभूमिगतप्रतिष्ठाः
प्रेङ्खन्मयूखनिकुरम्बकृतप्रकाशाः ।
आसन्समीकनिकषोपलपट्टहेम-
लेखाः सुरौघगजताकलधौतकक्ष्याः ॥३२॥

3697 तीक्ष्णार्धचन्द्रशरदारितमाहवाग्र-
लक्ष्मीपयोधरयुगं करिकुम्भयुग्मम् ।
उत्तुङ्गपीवरमलिप्ततरामभीक[1]-
क्लृप्तेन शोणरुचिशोणितकुङ्कुमेन ॥३३॥

3698 कृत्तावचूलमणिदण्डशिखावलग्न-
केतोः पटो विगलतिस्म समीकलक्ष्म्याः ।
अह्नाय पट्टक इवेन्दुमरीचिपाण्डु[2]-
रुत्तुङ्गपीन करिकुम्भकुचास्पदश्रीः ॥३४॥

3699 सन्मत्तवारण-विटङ्ककरालशोभ-
सङ्ग्रामहर्म्यशिखिनो दधति स्म लक्ष्मीम् ।
शङ्कुव्रजाः खचितचन्द्रकचक्रवाल-
कल्माषिताम्बुदपथाः सुभटैर्विमुक्तः ॥३५॥

---

१. B···अलिप्ततरारुभीक for अलिप्ततरामभीक । २. B omits मरीचि ।

3700 माद्यन्मतङ्गज-सरोषविमृद्यमान-
योधोच्छ्वसत्क्षतज-कुङ्कुमपङ्कचर्चाः[1] ।
व्यातेनुरश्चिचयिषन्त्य इवादरेण
चक्रेषु कूबरिगणस्य रणाङ्गनोर्व्यः ॥३६॥

3701 वीक्ष्याग्रतो निपतितं युधि नागराज-
मुत्तम्भितं समरमूर्ध्नि रदार्गलाभ्याम् ।
आलोल-पुष्कर-पुटाञ्जलिना सशोकः
संभावयन्निव गजः सुभटैर्व्यलोकि[2] ॥३७॥

3702 आपाण्डुर-श्रवणचामर-राजहंस-
सङ्ग्रामसिन्धुपुलिनद्विरदाधिरूढः ।
वैकुण्ठमप्यतिशयालुरनेकचक्र-
कृत्तारिमण्डलशिराः श्रियमाप योधः ॥३८॥

3703 प्रेङ्खत्कराल-करपुष्कर-बिन्दुजाल-
पर्युच्छ्वसद्दशन-मण्डल-चारुशोभाः ।
व्यापारिता युधि भटैर्द्विषतां वधाय
खड्गा [3]मतङ्गजगणाश्च समं विरेजुः ॥३९॥

3704 मातङ्गकुम्भयुगलं समवर्तिपाद-
पीठद्वयाकृति निशातकृपाणबाहुः ।
उत्प्लुत्य कश्चिदहितस्य गुरुप्रहार-
मूर्च्छाकुलस्य सुभटोऽच्छिनदुत्तमाङ्गम् ॥४०॥

3705 मन्युं व्यनेषत न संयति नापि दर्पा-
दच्योषताजिहत [4]नाजिहतेश्च भीतिम् ।
शौर्याच्चथात्रपिषत स्फुरतासिनापि
नाकद्विषोऽपणिषतासुभिरेव संख्ये ॥४१॥

---

१. C पङ्कचक्राः ।　　२. C व्यलोटि ।
३. B, C मतङ्गजगजाश्च ।　　४. C omits नाजिहतेश्च ।

3706 अन्योन्यमाजुहुवुषां विषमेषु धैर्य-
बन्धाद्विशृङ्खलमचस्खलुषां च तेषाम् ।
प्रावर्ततारिरभसेन तिरोहितार्क-
तारापथः सशपथो रणसम्प्रहारः ॥४२॥

3707 योधाः परस्परमपारपरम्पराक-
पर्याकुलाः शरपरम्परया तदानीम् ।
कम्पानुकम्प्य-भयकातरसंपराय-
पारायण-प्रणयिनस्त्वरया परीयुः ॥४३॥

3708 उत्पुप्लवे सपदि मण्डलमभ्यधाव-
दस्थाद्विचित्ररचनैः करणप्रपञ्चैः ।
सङ्ग्रामरङ्गभुवि योधजनो गृहीत-
[1]चर्मासियष्टिरिति नृत्तमिव व्यतानीत् ॥४४॥

3709 संस्कारहानिरहिता दधतो विशुद्धि-
मासादितश्रुतिपथाः स्फुटसंधियोगाः ।
शब्दा इवातनुफला घटितप्रबन्धा-
श्चक्रुर्महोदयजुषो विशिखाः प्रयोक्तॄन् ॥४५॥

3710 वल्गत्सु वाजिषु चलत्सु रथेष्वमन्दं
धावत्सु कुञ्जरकुलेषु सुरापगासीत् ।
निर्धूत-निर्दलित-मेरुनितम्ब-धूलि-
सान्द्रीभवत्कनकवालुककूलकच्छा ॥४६॥

3711 सेनातुरङ्ग-खुरकोटिविपाट्यमान-
हेमाचलासित-शिलोद्धत धूलिदिग्धाः ।
आसन्नगतप्रलयकालनिशावतार-
घोरान्धकारकलुषा इव दिग्विभागाः ॥४७॥

---

१. C धर्मासियष्टिरिति ।

3712 लावर्ण्यनिह्नुततया दलितेन्द्रनील-
धूलिच्छटापिहित दिग्विदिशि त्रिलोक्याम् ।
आसन्प्रवीर-करपङ्कजसन्निविष्टाः
खड्गाः करालमणिमण्डितमुष्टिमेयाः ॥४८॥

3713 सेनाविमर्द-दलितक्षिति-धूतधूलि-
जालान्धकारपिहिताखिलविग्रहाणाम् ।
लीनं कटेषु मदसौरभलुप्यमान-
सन्देहमोहघटनैः [1]करिणां द्विरेफैः ॥४९॥

3714 सेनाविमर्दविदलन्मणिचक्रवाल-
[2]चूर्णोत्थितैः सितसितेतररक्तपीतैः ।
शैलस्य धातुनिकरैरिव नाकमार्ग-
मासेदिवद्भिरुदसेचितरां रजोभिः ॥५०॥

3715 तस्मिन् रजस्तमसि तिग्ममरीचिबिम्ब-
माच्छाद्य तस्थुषि दिशः सकलाश्च सान्द्रे ।
अन्योन्यमौहिषत हेषितघोरघोष-
बृंहारवानुमितवाजिगजा भटौघाः ॥५१॥

3716 आकाशसिन्धुमकरी नगनागदान-
पङ्कच्छटावनिवधूत्पलमङ्गलस्रक् ।
दिक्कामिनीसरलसङ्गतचारुदीर्घ-
वेणीलता समरदुर्दिनमेघराजिः ॥५२॥

3717 पिङ्गप्रभाविकटहेतिहिरण्मयाद्रि-
स्कन्धाग्निधूमपटली वियदुत्पपात ।
सेनातुरङ्गखुरवज्रशिखाभिघात-
पिष्टेन्द्रनीलमणिमण्डल-धूलिलेखा ॥५३॥		युगलकम्

१. B निर्भृतं द्विरेफैः ।		२. C मूढोत्थितैः for चूर्णोत्थितैः ।

3718 उत्तिष्ठतिस्म दलितारुणरत्नरेणु-
राशिर्विचित्रमणिचूर्णकणावकीर्णः ।
विन्ध्यावनीध्र इव वर्त्मरुरुत्सुरुष्ण-
रश्मेः पुनर्विविधधातुशतानुविद्धः ॥५४॥

3719 वल्गत्तुरङ्गखुरकोटिनिपातपिष्ट-
सत्पद्मरागमणिरेणुकरालितश्रीः ।
रेजेतरां तरुणविद्रुमरागदिग्ध-
दुग्धोदधिप्रतिमितः स्फटिकाश्मरेणुः ॥५५॥

3720 [1]व्योमोदपप्तदुपतप्तमरीचिदीप्तिः
सावर्ण्यनिह्नुततयानुपलक्षितश्रीः ।
सन्दर्शयञ्जलमयीमिव सृष्टिमाशु
वैदूर्यरेणुनिकरः स्थगिताखिलाशः ॥५६॥

3721 दिङ्मण्डलं नवविदूरजरत्नराशि-
रेणूत्करैर्नभसि संतमसीभवद्भिः ।
आचक्रमे तरणिकूबरिचक्रनेमि-
निष्पिष्ट-नाकपरमाणु-गणायमानैः ॥५७॥

3722 निःश्वासमारुत-समीरण-कोटरस्थ-
सेनातुरङ्गखुरपिष्टमहोरजस्कान् ।
आध्मासिषुः कथमपि त्रिदशामरारि-
योधा जडीकृतरवान्समराय शङ्खान् ॥५८॥

3723 संवीतकृत्स्न भुवनत्रितयान्तराल-
सान्द्रीभवत्क्षितिरजः स्थगितप्रकाशाः ।
आह्वासताधिरणवर्त्म परस्परं ते
भोगावलीभिरुपलक्षितनामधेयाः ॥५९॥

---

१. B व्यामोदप्तदधतप्त for व्यामोदतप्तदुपतप्त ।

3724 उत्थाय चावनितलात्कमलासनाण्ड-
पर्यन्तदर्शनकुतूहलिनेव दूरम् ।
स्कन्धेष्वकारि मरुतां पदमोघलेप-
लुप्तांशुमालिमहसा रजसोद्धतेन ॥६०॥

3725 संशिश्रिये विदलितासितरत्नहेम-
पट्टोत्थितातनुरजःपटलावगाढैः ।
धूम्रीभवद्भिरभितो धवलातत्र-
खण्डैरुपप्लुतनिशाकरमण्डलश्रीः ॥६१॥

3726 छत्त्रैर्न्यपाति शितशल्यशराभिघात-
रुग्णाभिरामकलधौतमयोच्चदण्डैः ।
आयोधनावनितलोद्धतपृष्ठलग्न-
धूलीवितानगुरु-भारभरादिवोच्चैः ॥६२॥

3727 श्च्योतन्भरादयमपह्नुतवासरश्रीः
शान्तिं पुरा नयति दानजलप्लवो माम् ।
इत्यौर्वरेण रजसा करिकर्णरन्ध्र-
दुर्गेष्वनागतमिवाभिविचिन्त्य लिल्ये ॥६३॥

3728 सङ्ग्रामवर्त्मनि रजःपटलावकीर्णे
[1]निर्मग्नवेगपरिवर्तनशून्यचक्रम् ।
कृच्छ्रेण कूबरिकुलं यमदार्ढ्यशालि-
नैवेन्द्रियैरिव मनश्चकृषे तुरङ्गैः ॥६४॥

3729 आकम्पितावनिनिरर्गलवेगपात-
निःस्पन्दमूकित-विशङ्कटपार्श्वघण्टैः ।
अन्योन्यमप्यनवलोक्य रजोन्धकारे
हस्तावमर्शघटितैर्युयुधे गजेन्द्रैः ॥६५॥

---

१. C निर्मग्नवेश ।

3730 प्रलयाभ्रमलीमसां दधानः
श्रियमायोधनवर्त्मनि न्यरौत्सीत् ।
अतनुगुरुसैन्यरेणुराशि-
र्ग्रहकल्लोल इवोष्णरश्मिबिम्बम् ॥६६॥

8731 सिक्तेन सककटनिर्गतभूरिदान-
धाराप्रवाहकृतबंहिमभिस्तदानीम् ।
सैन्ये न्यशामि [1]तरसा रजसोद्धतेन
गम्भीरकुञ्जरकरोज्झितवारिवर्षैः ॥६७॥

3732 अस्ते रजोविसरवाससि नागगण्ड-
विष्यन्दिभिर्मदजलैरपवस्त्रिताङ्ग्यः ।
संविव्यिरे दशदिशः सुरचापचक्र-
निष्ठ्यूतनिष्ठुरशरातनुपुङ्खपक्षैः ॥६८॥

3733 कटविगलितदानाम्भोभिरावर्तमान-
प्रतिमपतितचक्रैः क्ष्मातले कुञ्जराणाम् ।
नभसि च करमुक्तैः शीकरैरुच्छलद्भिः
क्षपितघनपरागो रत्नसानुस्तदासीत् ॥६९॥

3734 इत्थं दर्पान्धगन्धद्विरदकटतटी-निष्ठ्य-निष्ठ्यूत-दान-
स्रोतः सन्तानमिश्रीकृत-विकृतकरप्राप्तवालाम्बुसेकैः ।
शान्तेष्वाशान्त-कान्ति-व्युपरम-परमापार-पूरेषु-युद्ध-
क्षोणीक्षोदेषु रत्नाचलशिरसि पुनः सङ्गरोऽभूत् भटानाम् ॥७०॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये गजाश्वसंमर्दो नाम चतुश्चत्वारिंशः सर्गः ।

---

१. B, C रजसा तरसोद्धतेन for तरसा रजसोद्धतेन ।

## पञ्चचत्वारिंशः सर्गः

3735 अवलोक्य दानवचमूपतीनथो
विमुखान् रणाद्गिरिशमार्गणार्दितान् ।
स्मितदीधिति-[1]स्फुरित-गण्डमण्डलो-
निजगाद दैत्यपतिरित्थमूर्जितम् ॥१॥

3736 तस्योत्सिसाहयिषतो द्विषतां वधाय
संरम्भिणो दितिसुतान् समरात्पराचः ।
वक्त्रादनभ्यवहृतोऽपि विनिर्जगाम
सान्द्रः सुधौघ इव दन्तमरीचिराशिः ॥२॥

3737 हे दैत्याः ! कथमभिमानशालिनोऽपि
व्यारुण्णाहवरसमाशु विद्रवन्तः ।
नेक्षध्वे पृथुनिजवंशवैजयन्ती-
माक्षिप्तां धवलरुचिं परेण कीर्तिम् ॥३॥

3738 सेना विलोकयति जिह्ममसौ सहास-
मायोधनात्सपदि वः प्रपलायमानान् ।
शूलायुधेन कृतसन्निधिरप्यभीक्ष्ण-
मारादखण्डपरशूरचिताञ्चितश्रीः ॥४॥

3739 अनल्पपक्षप्रसरं पतद्भिर्विपक्षनाराचपतङ्गचक्रैः ।
समिद्धतां संदधती कथं वो निर्वापिता दीपशिखेव शक्तिः ॥५॥

---

१. C छुरित for स्फुरित ।

3740 कल्माषितांसशिखरैर्भुजमण्डलीषु
रत्नाङ्गदैः किमिव शंसत ! भारभूतैः ।
एता भवन्तु रणनिर्वरवैरिवर्ग-
दोर्दण्डदर्पदलनोज्ज्वलमण्डना वः ॥६॥

3741 कालरात्रिभुजसंहतीरिमाः
प्रेतनाथपुरपद्धतीर्गदाः ।
बिभ्रतोऽपि भयकातरेक्षणं
न ह्रियं व्रजत ! किं पराङ्मुखाः ? ॥७॥

3742 लघीयसापि द्विषतो भयेन
हतत्रपं विद्रवतामिदानीम् ।
न मुद्गरा भान्ति कृतान्तहर्म्य-
स्तम्भा अमी पाणितलस्थिता वः ॥८॥

3743 नोत्पादयेत् कथमुपेक्षितदुर्विपक्ष-
हेलानिकारकलुषा विरसत्वमित्थम् ।
उद्धूयमानधवलाञ्चितचामरौघा-
तद्दुःखसम्भृतजराधवलेव लक्ष्मीः ॥९॥

3744 हेलानिपात-हतसंहत-हस्तिहस्त-
हेतिः सहेत सहसानिलवेल्लचमानाः ।
सिंहः सटा अपि कथं गुरुरोषगाढ-
गम्भीरगर्जितनिनादितशैलकुञ्जः ॥१०॥

3745 अरातिशस्त्रव्रण-रोहकर्मणे-
वधूजनस्यार्पयतां चिराय वः ।
सरुञ्जि पृष्ठानि भविष्यति स्फुटं
विरूढलज्जाभरमन्थरं मनः ॥११॥

3746 हेतिव्रणाभरणशून्यविशङ्कटांस-
कूटाः कथं नु भवतां [1]बत वाहुदण्डाः ।
गण्डोपधानपदवीं दयिताजनस्य
नीता भवेयुरधुना बहुमानपात्रम् ॥१२॥

3747 प्रायेण कार्यकरणं प्रतिविस्फुरन्ति
तेजस्विनो न बहुसाधनसव्यपेक्षाः ।
लोकान् विनिर्दहति सप्तभिरेव सप्त
संहारकालमुदितो दहनः शिखाभिः ॥१३॥

3748 क्षतौजसामपि रिपुणा लघीयसा
पलायनोन्मुखमनसामितोऽधुना ।
कराश्रया निजकिरणच्छलेन वः
[2]समुद्वमन्त्ययश इवासियष्टयः ॥१४॥

3749 क्लिष्टं मलेन न कदाचिददहेम[3]बद्ध-
मावन्ध्यताविरहितं स्पृहणीयरूपम् ।
निर्व्याजमाहुरिह भूषणमार्यवृत्ताः
शौर्यप्रतापजनितं यश एव पुंसः ॥१५॥

3750 तावद्व्रजन्ति गुरुतां यशसैव याव-
दध्यासिता हिमविपाण्डुरुचा महान्तः ।
लूने [4]विकासिकुसुमे च शिखाग्रभागा-
त्कस्यादरो भवति ? शंसत ! तस्य वृन्ते ॥१६॥

3751 श्च्योतत्प्रफुल्लनवचूतसुगन्धिदान-
गण्डालिमण्डल-सडिण्डिमडम्बरेभ्यः ।
स्तम्बेरमेभ्य इव केसरिणां न भीतिः
सम्भाव्यतेऽत्रभवतां [5]भवतां रिपुभ्यः ॥१७॥

---

१ A, B omit वत ।	२. C समुद्वहन्ति for समुद्वमन्ति ।
३. C ददेहबद्ध for दहेमवद्ध ।	४. B, C विकासिकुसुमं च for विकासिकुसुमे च ।
५. B पूज्यानां (footnotes) ।

3352 हेलानिरस्तपवना गुरुसम्प्रहार-
जृम्भा महासुरभटाः पटुतां व्रजन्ती ।
नूनं [1]समीकभुवि शीतलतां करोति
फूत्केव वक्त्रविसृतोष्मजुषां द्विषां वः ॥१८॥

3753 न प्राप्नुवन्ति हि पराङ्मुखतामुदार-
सत्त्वा रिपो रणमुखेष्वपि हन्यमानाः ।
दह्यन्त एव जलधेर्वडवानलेन
तस्य व्रजन्त्यभिमुखं च तरङ्गभङ्गाः ॥१९॥

3754 प्रत्यक्षमेव भवतामविरुग्णमौर्वी-
शाखाकृतास्पदविचित्रपतत्रिचक्राः ।
कोदण्डतालतरवोऽप्यधुना दिशन्ति
यच्छ्रीफलं रिपुजनस्य महाद्भुतं तत् ॥२०॥

3755 निशितमायुधमञ्जलिसम्पुटः
पुलक एव भिया च तनुच्छदः ।
ननु भवज्जयसाधनमाहवे
प्रणतिरेव शिरस्त्रमिह द्विषाम् ॥२१॥

3756 कण्ठे भिया विनिहितः करवाल एव
कण्ठत्रतामुपगतः शतशः सुराणाम् ।
आलोक्यतां भटजनेन सहस्तताल-
हासस्फुरद्दशनदीधितिमण्डलेन ॥२२॥

3757 पृथ्वी वराहवपुषा खगकेतनेन
[2]योत्तम्भिता फणिनिकेतनतः कथञ्चित् ।
सा तर्जनीतुलितविस्तृतसन्निवेशा
शक्यं विधातु[3]मतिवेलवलैर्मरुद्भिः ॥२३॥

---

१. B, C समोकभुवि for समीकभुवि ।
२. प्यत्तोम्भिता for योत्तम्भिता । ३. C''''मभिवेलवलैः ।

3758 विश्लिष्ट-दीर्घभुजगाधिप-भोगबन्ध-
दिङ्मण्डलाभिमुख-धावदनर्गलाश्वाम् ।
शक्ताः स्थ कर्तुमवरुग्णखलीनपाश-
भीतारुणां तरणिकूबरिणोऽपि संस्थाम् ॥२४॥

3759 वक्षः स्थलीविगलितैर्घनघर्मवारि-
लेशैः समीकजनितैर्नभसि स्थितानाम् ।
शक्यं क्षणान्मकर-मन्दिर-घस्मरोऽपि
ज्वालाकुलः शमयितुं वडवानलो वः ॥२५॥

3760 तेजस्विनोऽतिमहतः क्वचनापि नूनं
तीक्ष्णे मृदौ च न विहन्यत एव शक्तिः ।
उत्थाय नागनगराद्वडवाग्निनैव
सार्धं विनिर्दहति सिन्धुपतिं क्षयाग्निः ॥२६॥

3761 ज्वालाकलाप-कवलीकृत-कूर्मकेतु-
मौर्वं किल ज्वलनमूरुजमाहुरार्याः ।
दग्धारिकाननममुं तु रणौघशूर-
कोपानलप्रभवमेव विशालसत्त्वाः ॥२७॥

3762 [1]संख्यानशून्यमधिसंख्यमखण्डवृत्ति-
धैर्यं परामृशति यो भवतामिदानीम् ।
आकाशमुत्खनति नूनमसावखिन्न-
चेता नखाटनिखनित्रमुखेन सद्यः ॥२८॥

3763 दीप्तार्धचन्द्र-करि-कर्णपरश्वधाग्र-
पातद्विधाकृतमतङ्गजदन्तदण्डे ।
अव्याहतत्रिविधपातकृतात्मयोध-
सिंहानुकर्षविनिपातिततोमरौघे ॥२९॥

---

१. C संख्यात शून्य ।

3764 चेतोहराश्चित-विविक्तधनुर्विकल्प-
शिक्षाविशेष-शुचिसौष्ठवधन्विचक्रे ।
नानाप्रकार-फल-पुष्प-पलाश-कल्प-
सङ्कल्पित-प्रचुरसुन्दर-भिन्दिपाले ॥३०॥

3765 सुश्लिष्ट-मुष्टि-विनिवेशसुखग्रहाश्रि-[1]
सम्पन्नबर्हिणपतत्त्रिणि दिग्धशङ्कौ ।
आकर्षसौष्ठवसुनिष्ठुरवीतनिष्ठ-
टाङ्कार-चण्डगुण-नर्तित-चापचक्रे ॥३१॥

3766 दुःखं न किञ्चिदपरं पुरुषत्वहाने-
र्युद्धे मुधा समुदयोऽत्र चमूचराणाम् ।
मार्गोऽयमेव भवतां ननु शान्तिहेतु-
र्योऽरेर्जयश्रिय इव क्रियतेऽवरोधः ॥३२॥ चक्कलकम्

3767 तेजस्विनो न खलु काचिदपीह शक्ति-
राप्नोति कार्यकरणे क्वचनोपघातम् ।
एकापि सास्ति न शिखा वडवानलस्य
या निर्दहत्यनिशमेव न सिन्धुतोयम् ॥३३॥

3768 प्राप्तामधिप्रघनमश्चितदोहदत्वं
सेनां विधाय सुरभर्तुरनुत्तमाङ्गाम् ।
प्राज्यं यशः पिबतु वो भटचक्रवाल-
मव्याहतं पय इवेन्दुमरीचिगौरम् ॥३४॥

3769 एते त एव निजकुङ्कुमपङ्कपिङ्ग
सङ्ग्रामरागविलसत्पुलकाः स्थिता वः ।
अद्यापि कम्पितपितामहपुण्डरीक-
संसक्तकेसरशिखा इव बाहुदण्डाः ॥३५॥

---

१. B मुखाग्रताश्रिः for सुखाग्रताश्रि ।

3770 सङ्ग्रामकाननतमाललतावलीषु
सेनाकलिन्दतनयाजलवेणिकासु ।
संवर्तकालरजनीषु भयानकासु
निस्त्रिंशयष्टिषु कथं भवतामनास्था ? ॥३६॥

3771 अभ्यागमान्मरणसंभ्रमतः किलाशु
यूयं पलायनपरायणतामुपेताः ।
तच्चोष्मणा विरहितैः प्रतिपन्नमेव
युष्माभिरित्यपुनरुक्तमिदं कुरुध्वम् ॥३७॥

3772 सङ्ग्रामादरिभयविप्लुताः पराञ्चो
निर्ह्रीका ननु विषमीकुरुध्वमेताम् ।
विस्तीर्णां किमिति मुधा कृतान्तलीला-
वाह्यालीमसुरभटा ललाटभित्तिम् ॥३८॥

3773 शौरेः पदातय इमे रणमूर्ध्नि वल्गु-
व्यावल्गितैः किमिति वो न रुजन्ति चेतः ? ।
तीक्ष्णाग्र-[1]तुण्डविहगाधिपकङ्कवक्त्र-
[2]लीलोद्धृतासुरपराभवशल्यकल्पाः ॥३९॥

3774 लीलागृहीतकुटिलेन्दुकला कुशाग्र-
संरुद्धकुम्भतटदिग्गजवाहिकाभिः ।
आकम्पितत्रिभुवना तरसा विहार-
हेला सुरैः सभयविस्मयमीक्षिता वः ॥४०॥

3775 हेलाविनिर्धुतरजः सुमनः प्रतान-
पर्याकुलाकुल-शिलीमुख-चक्रवाले ।
सङ्ग्रामकाननतलेऽत्र भवद्भिरेव
भग्ना गदाशु हरिचन्दन-शाखिवल्ली ॥४१॥

---

१. C omits तुण्ड ।    २. C लीलोद्धताम्बर ।

3776　उल्लासि दूर-तरमस्खलितत्वमाप्त-
मुल्लङ्घिताखिलजगत्प्रतिबन्धशून्यम् ।
श्लाघ्यं दुरावतरया भुजशालिनां हि
पूर्वं यशस्तदनु विस्फुरतीह तेजः ॥४२॥

3777　अवरुग्णकम्बुमणिहारमेखलं
नखकोटिपाटितकपोलमण्डलम् ।
पतिनाशदुःखमचिराद्विजृम्भतां
सुरतायमानमसुरारियोषिताम् ॥४३॥

3778　अवश्यमायोधनमूर्ध्नि धूर्जटे-
र्मया जितस्य प्रमथप्रमाथिना ।
ध्वजाग्रसंवेल्लित-कृष्णचामरा
विमुक्तकेशीव पुरी विभाव्यते ॥४४॥

3779　[1]पश्यत्यमन्दकरघातविमूढरक्त-
श्यामच्छविस्तनयुगं मयि बद्धकोपे ।
शत्रुस्त्रियः परिजनो न चिरात्पिनद्ध-
व्यालीनकञ्चुकमिवाहितदीनदृष्टिः ॥४५॥

3780　आनन्दशून्यहृदयत्वमुपेयुषीणा-
मीर्ष्यापरिग्रहविनाकृतमानसानाम् ।
विष्यन्दतामनिशमार्तिजमेव बाष्प-
तोयं भटा भवदरातिनितम्बिनीनाम् ॥४६॥

3781　शोभाभङ्गादानकृद्धो महार्घे
येयं श्लिष्टाश्यामिका शौर्यरत्ने ।
सङ्ग्रामोर्वी विद्रवाख्या कृपाण-
प्रेङ्खद्धारावारिभिः क्षाल्यतां सा ॥४७॥

---

१. B, C पतत्यमन्द ।

3782 यावन्न संयुगयुगान्तसहस्ररश्मि-
रेषोऽस्तमेति करवालकरैः करालः ।
तावद्भवद्भिरयशस्तिमिरैररुद्ध-
उल्लङ्घ्यतां लघुतरं रणशौण्डमार्गः ॥४८॥

3783 विध्यन्त्यङ्गममूर्यथा स्मितरुचो मुक्ता रणप्रेक्षकै-
र्नैवं पत्त्रिपरम्परा कटुरणत्कोदण्डखण्डच्युताः ।
संप्रस्तौत्ययशो यथा च नितरामन्धं तमश्चक्षुषो-
र्नैवं वाजिखुराग्रखण्डितरणक्षोणीसमुत्थं रजः ॥४९॥

3784 वार्ताभङ्गः प्रथयति यथा मूर्च्छनामिन्द्रियाणां
सान्द्रोऽप्येवं न खलु सुभटप्रेरितोऽस्त्रप्रहारः ।
त्यक्ताः प्राणैर्भृ शमशुचितां नैवमायान्ति काया
यद्वद्व्रीडां गुणमणिखनिं लङ्घयन्तो लघीयः ॥५०॥

3785 अद्याप्येतासु गन्धद्विरद-कुलनगोद्दण्डगण्डोपलेभ्यो
निर्यान्तीषु प्रलीन-भ्रमर-शितिसरोजन्मखण्डास्वखण्डम् ।
दानाम्भोनिम्नगासु प्रकटितविकटासक्तयो वः कृपाणाः
कुर्वन्तूद्धृत्तकृष्णोरगकुलवलनाडम्बराणां विडम्बम् ॥५१॥

3786 इत्युत्साहसमृद्धिसागरपयः पालीमृगाङ्कप्रभां
क्रूरामर्षकृशानुदीपनदशाकल्पान्तवातावलीम् ।
श्रुत्वा दैत्यपतेः पराक्रमगुणोदाराग्र्यगुर्वीं गिरं
ते भूयोऽप्यसुराः सुराहवविपद्दीक्षासु दाक्ष्यं दधुः ॥५२॥

3787 ग्लानिग्रस्तगजं जितोग्रतुरगं सीदत्पदातिव्रजं
मन्दस्यन्दन-चारमस्रसरितां पूरैः [1]परिप्लावितम् ।
मायाकोविददैत्यमुष्टिनिपतत् [2]खर्वासिसर्वायुधं
योधैर्दैत्यपतेरकारि करुणास्वादानभिज्ञैर्मृधम् ॥५३॥

---

१. B परैः प्लावितं for परिप्लावितं । C परं प्लावितम् ।		२. C दुर्वासि for खर्वासि ।

3788 क्रन्दत्संक्रन्दनानां प्रमथमथनकृन्मत्तदैत्याधिपानां
विद्राणैरावणानामशरणवरुणारब्धदिक्सङ्ग्रहाणाम् ।
ग्लानिग्राहिग्रहाणां गहनरणधरानिश्चरत्खेचराणां
सैन्यं दैत्यात्सुराणामनिशमशरणं [1]दैत्यचक्रेण चक्रे ॥५४॥

3789 पीलूनां खड्गलूनैर्बहु बहुमकरैः कीर्णमन्तःकरौघै-
र्वाहानां शस्त्रघातस्थपुटितवपुषां नक्रवद्व्याप्तमङ्गैः ।
लब्धास्थैः स्थूलमत्स्यैरिव हतपतितैर्युद्धभाजां भुजौघै-
रस्रस्रोतस्विनीनामजनि कुलमथाकुण्ठकं कण्ठदघ्नम् ॥५५॥

3790 उद्धूतेषु कबन्धकण्ठकुहरा भोगाद्धरेणासृजा-
मुत्पीडेष्वथ पद्मरागमुसलस्थूलाकृतिस्पर्धिषु ।
बिभ्राणा भ्रमिविभ्रमं भृतमहायूथा विहङ्गावली-
लीलोल्लासितकालरात्रिपृथुलच्छत्राकृतिं प्राकरोत् ॥५६॥

3791 क्रव्याशिनिष्कुशितकुञ्जरकुक्षिकूप-
निर्मग्ननिर्थदतनूद्भवविद्धसिद्धम् ।
दिग्दन्तिकुम्भतटदघ्नभटास्रकुल्या-
गर्भब्रुडद्विबुधमाहववर्त्म जज्ञे ॥५७॥

3792 इत्थं निर्मथ्य दैत्याधिपधुतविबुधानीकिनीनैकपात-
प्राप्तप्रौढावसादानतसुरशिखरिक्लिष्टरत्नाङ्कशृङ्गे ।
जाते दुर्जातजन्मज्वरविधुरगणग्रामकामे प्रकामं
सङ्ग्रामेऽत्युग्रमुग्रालिकभुवि भ्रुकुटिः कूटबन्धं बबन्ध ॥५८॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये सुभटसन्दीपनो नाम पञ्चचत्वारिंशः सर्गः

---

१. C शत्रुचक्रेण for दैत्यचक्रेण ।

## षट्चत्वारिंशः सर्गः

3793 [1]सकालकूटं वहतीव यो गलं
कलिन्दकन्यासहितं सहार्थया।
सुरस्रवन्त्याश्च जलं समीरयन्
कलिन्दकन्यासहितं सहार्यया ॥१॥

3794 रविबिम्बमिवाभिनिर्यदंशु-
च्छुरिताकाशमथामुना रणाग्रे।
धनुराचकृषे रिपुक्षयाय
स्फुरटङ्कारचितां श्रियं दधानम् ॥२॥ युगलकम्

3795 सोऽभ्रमद्वितकार्मुको रथे
मानशेवधिरुदारवाजिभिः।
तच्छरैश्च गिरिरर्कतेजसा-
मानशेऽवधिरुदारवाजिभिः ॥३॥

3796 क्षयार्कवैवश्वतकालवह्निभिः
कथैव का संहरणक्रमोद्यतैः।
बभूव नात्माप्युपमानमाहवे
दुरासदत्वेन कपालमालिनः ॥४॥

3797 गणसेनथा प्रतिदिशं तरसा
प्रथमानया सममया च ततम्।
अभयं सुरारिपृतना समिति
प्रथमानया सममयाचत तम् ॥५॥

---

१. B adds ओं in the begining।

3798 रणवर्त्म हिमाद्रिजापता-
ववतेरुष्यथ मङ्गलेच्छया ।
सुरसद्मभुवेव रम्भया
रुचिराखण्डलयज्ञया जगे ॥६॥

3799 शशिलेखया शिरसि यस्य मुग्धया
न वशस्य मानसमरंस्त नद्धया ।
तमवाप्य वैरिपृतना ननाश सा
नवशस्यमानसमरं स्तनद्धया ॥७॥

3800 विष्यन्दिसान्द्ररुधिरारुण-धातुराग-
रक्तानि तस्य विशिखैर्विशिखासनास्तैः ।
कृत्तान्यलोठिषत दैत्यशिरांसि गण्ड-
शैलश्रियं दधति काञ्चनशैलशृङ्गे ॥८॥

3801 नतलोकहितक्रियासमाना
नवमा यस्य तितांसतां सदस्त्रः ।
युधि शक्तिमसौ द्विषां स्म हतुं
नवमायस्यति तां सतां सदस्त्रः ॥९॥

3802 तुरगखुरशिखानिपातपिष्ट-
त्रिदशमही प्रनितम्ब-धूलिपुञ्जैः ।
कपिशवलमथामरारिचक्रं
स्फुटमिव जाम्बवदक्षसैन्यमासीत् ॥१०॥

3803 सेनाभिरस्याक्रियतारिचक्र-
महासमाजावनिशं सिताभिः ।
यशश्छटाभिर्दधतोऽथ लक्ष्मीं
महासमाजावनिशंसिताभिः ॥११॥

3804 ससृजे शरवृष्टिरन्धकाद्यै-
दितिजैस्तत्र विचित्रहेमपुङ्खा ।
विमुखीक्रियते स्म सा पतन्ती
पटुहुङ्काररवैः स्वयंप्रभेण ॥१२॥

3805 गीर्वाणवृन्दमसुरानधिसंयुगोर्वि-
नाशक्रमेण सममर्दयतः समायान् ।
मत्तो मतङ्गज इवाशु सरोजखण्ड-
नाशक्रमेण स ममर्द यतः समायान् ॥१३॥

3806 तद्गुप्त्यै रणभुवि नन्दिषेणमुख्या
दैत्येन्द्रं प्रतिमुमुचुर्महास्त्रवृष्टीः ।
शृङ्गीवातनुकुलिशाग्निभिन्नसंधि-
स्ताभिः स द्रुतमथ भङ्गुरत्वमापत् ॥१४॥

3807 युधि भान्निहतेन वैरिणा
स हि डिम्बेन जटासुराजितः ।
अथ भीम इवाभ्ययुङ्क्त तान्
सहिडिम्बेन जटासुराजितः ॥१५॥

3808 आजघ्नुरत्रावसरेऽथ दैत्य-
गणाधिपाः सङ्गररागभाजः ।
कोदण्डसंवर्तकमेघचक्र-
क्रेङ्कारगर्जारवपूरिताशाः ॥१६॥

3809 जघान तांस्त्रिदिवभिदोऽरिपौरुषं
स हारवानकलयतोऽवधानतः ।
जिगाय च स्तनितमथाम्बुवाहिनां
सहारवानकलयतोऽवधानतः ॥१७॥

3810 श्रियमाप स चन्द्रशालिकान्तां
चिरमासेवितभस्मपाण्डुरां सः ।
स्फुटसौधतलस्थितां तदानीं
दधदायोधनवर्तिवीक्षितश्रीः ॥१८॥

3811 निजघान नासुरवरूथिनीं जवा-
न्न बतायमानकि रणं समाश्रिताम् ।
श्रियमस्य शूलमतनोच्च संदध-
न्नवतायमानकिरणं समाश्रिताम् ॥१९॥

3812 शेषः किमेष न किमस्य फणासहस्र-
मालोक्यते हिमगिरिर्ननु निश्चलः किम् ।
इत्याहवाभिमुखमिन्दुकलावतंस-
मायान्तमीक्ष्य समशेरत दैत्ययोधाः ॥२०॥

3813 रणमूर्ध्नि विचित्रशस्त्रजालै-
र्व्यधमन्दानवसादिनोऽभियातान् ।
प्रमथा रभसेन युध्यमाना
व्यधमन्दानवसादिनो भिया तान् ॥२१॥

3814 घटितपरिकरोऽथ नालिकाभिः
प्रकटितविस्तृतकालखण्डनाभिः ।
दिवस इव निपत्य गृध्रचक्रै-
र्युधि पिदधे मृतविग्रहः स तेषाम् ॥२२॥

3815 स प्रांशुरोजस्यसुरान्स्म हन्तुं
न हस्तिरोधी यतते नवेऽगात् ।
सेनारजोभिः समरे च तस्मि-
न्नहस्तिरोधीयत तेन वेगात् ॥२३॥

3816 सुरारिबाणैरथ हन्यमान-
स्तदा चकम्पे न मृगाङ्कमौलिः ।
भुजङ्गभीमैः क्षुभिताम्बुराशे-
स्तरङ्गभङ्गैरिव तीरशैलः ॥२४॥

3817 स सुरयुवतिभिर्मृधे विवल्ग-
न्नवशवलन्नयनाभिरस्रमाभिः ।
विदधदसकृदैक्ष्यत स्वकान्त्या
नवशवलं नयनाभिरस्रमाभिः ॥२५॥

3818 वक्षः शिलाघनमथेषुभिरुल्लिलेख
तस्यान्धकोऽधिरणसिन्धु विवर्तमानः ।
शृङ्गाग्रकोटिभिरधोक्षजबाहुयन्त्र-
मन्दीरचक्रमिव मन्दरभूधरेन्द्रः ॥२६॥

3819 अभाजि सकेङ्कितमस्य कार्मुकं
नमत्सरेणावहितस्य सादिनः ।
रणे पृषत्कान्किकरतोऽथ शंभुना
न मत्सरेणावहितस्य सादिनः ॥२७॥

3820 तं जघान रिपुमत्तकाशिनी-
वक्त्रपङ्कजवनक्षपाकृता ।
अर्धचन्द्रविशिखेन दानवो
मण्डलीकृतधनुश्च्युतेन सः ॥२८॥

3821 कीर्तिष्वनवस्थितमना भयदो भुवाथ
सद्योगजासु रवधूनितया समांसः ।
कीर्तिश्रिया समुदितः समरे चचार
सद्योऽगजासुरवधूनितयासमां सः ॥२९॥

3822 प्रह्लादादिभिरथ सैन्यभङ्गभाजौ
पश्यद्भिस्त्वरितमुपेत्य दैत्यनाथैः ।
जघ्ने स त्रिशिखकृपाणबाणवृष्ट्या
कालाग्नैरिव शिखरी सघोरगर्जैः ॥३०॥

3823 रणभुवमजितोऽवतीर्य धाम्ना
समरवि मर्दनतां ततां तदापत् ।
त्रिदशगिरिरपि स्मरारिसेना-
समरवि[1]मर्दनतान्ततां तदापत् ॥३१॥

3824 प्रसृतवह्निशिखासरलाङ्गुलि
स यमहस्तमिवाथ शिलीमुखम् ।
युधि ससर्ज रुषा सुरविद्विषे
स वपुरस्य निनाय कबन्धताम् ॥३२॥

3825 स गुणै रणेष्वपि यशःपटं
ततोऽमृदुवायसेषु समदो रसं गतः ।
रुचिमान्धनुर्मुखरयन्द्विषच्चमू-
मृदुवाय सेषु समदोरसङ्गतः ॥३३॥

3826 एकत्र त्रिदशगणैरभिद्रुताना-
मन्यत्र प्रमथबलैश्च दानवानाम् ।
कीर्त्यैवाहवभुवमुज्झतामशेषां
पर्याप्ता दश ककुभोऽपि नो बभूवुः ॥३४॥

3827 नाकद्विषामथ गणं युधि चक्रवांस-
मायासभाजमहितान्तकरंहसं तम् ।
तुष्टाव साम्बरसदां मुदितावरुग्ण-
माया सभाजमहितान्तकरं हसन्तम् ॥३५॥

१. C विदर्दन ।

3828 दैत्यानीकेष्वायससन्नाहनिपाता-
　　दाकर्ण्योच्चैस्तारखणत्कारमसीनाम् ।
सस्मारौघो नाकसदां पर्वतपाली-
　　पक्षच्छेदक्रूरविरूक्षध्वनितानाम् ॥३६॥

3829 स मानयामास दशासमानया
　　समानया संयति भासमानया ।
समानयाद्रेः सुतयासमानया
　　समानयातोऽविरहं समानया ॥३७॥

3830 दितिजसमितिनायकेन तस्मिन्-
　　अथ रणवासगृहे विलुप्तमाना ।
कुसुमशररिपोः प्रियेव भेजे-
　　नवनखराजिविदारितोरुदण्डा ॥३८॥

3831 स मानसीमात्तसमानसीमा
　　सिन्धोर्विधायारिजनस्य पीडाम् ।
हसन्निवेशं सहसन्निवेशं
　　स्फुरत्कपोलामलकान्तिरस्थात् ॥३९॥

3832 निरास तं बाणगणैर्गणाधिपः
　　ततोऽस्य तेनाप्रतिमेन कर्मणा ।
जगाम वैलक्ष्यगृहीततन्मुख-
　　त्विषेव सार्धं परिपाण्डुतां यशः ॥४०॥

3833 अकृत युधि विनायको विद्विषां
　　न च कमतनुतापदावं चितम् ।
[1]मृतममरवधूः श्रिता विभ्रमान्
　　अचकमत नुतापदा वञ्चितम् ॥४१॥

---

१. C omits two lines ।

3834　भोगीन्द्रभोगायतबद्धशोभ-
　　प्रवेष्टनाभिः स रणाजिरोर्व्याम् ।
व्यराजत क्षीरसमुद्रमन्थ-
　　संरम्भसज्जीकृतमन्दराश्रीः ॥४२॥

3835　[1]मुखश्रियं विभ्रदसौ विनिर्जित-
　　स्वरुं तु दन्तेन समाननागताम् ।
जघान मेघान्व्यतिपेतिवान् रणे
　　स्वरुन्तुदं तेन समानना गताम् ॥४३॥

3836　स्तम्बेरमा विनिहिताञ्चितचीन[2]पिष्ट-
　　विस्पष्टपाटलिमसम्भृतकुम्भशोभाः ।
सम्भाविताः प्रधनमूर्ध्नि दधुर्मदाम्भः-
　　सम्भारिणो गणपतेः परिवारलीलाम् ॥४४॥

3837　कथमपि सानकपटहा रणभूमीः प्राप्य वर्चसा न कपटहा ।
स्थगिताशोभनगण्डं द्रुहिणस्य दधन्मुखं शोभनगण्डम्[3] ॥४५॥

3838　व्यचरत्तरसाथ षण्मुखो
　　युधि शक्त्योभयरूपया श्रितः ।
असमार्चिरिवाहुतीर्वहन्
　　स्फुटसम्पन्नवषट्पदाः स्रजः ॥४६॥

3839　सुरयुवतिजनस्य तत्र नाना-
　　सुरभिदि विभ्रमदक्षतामलासीत् ।
श्रियमतनुयशश्च तस्य शुभ्रं
　　सुरभि दिवि भ्रमदक्षतामलासीत् ॥४७॥

---

१. C omits the first line ।　　२. C omits one letter ची ।
३. C गणम् for गण्डम् ।

3840 संवर्तमेघमलिना दधतोऽथ तैक्ष्ण्य-
मक्षुण्णपाटवजुषः प्रतिपक्षभेदे ।
[1]तस्योदधानिषत दैत्यभटा कृपाण-
पट्टाश्च गाढपरिवारगणाः स्वसैन्यैः ॥४८॥

3841 रणाङ्गनोर्वी दधदाहितोन्मद-
द्विपक्षयो धाम स कृत्तदानवैः ।
चकार बाणैर्बहुलासुतः स्खल-
द्विपक्षयोधामसकृत्तदा नवैः ॥४९॥

3842 निःशेषां सकनककम्बुनेत्रशोभः[2]
सङ्ग्रामावनिकलशीं विलोक्य शत्रोः ।
रीढाभिः प्रकटितसार एक उच्चै-
र्वैशाखः सपदि बभूव बाहुदण्डः ॥५०॥

3843 दैत्यानहिमहिम हिमतरोऽद्धा
रोद्धा दलयति यतिभयहृद्यः ।
हृद्यः स जगति गतिहृदसंख्ये
संख्ये कृतरतिरतिगुरुरासीत् ॥५१॥

3844 महाजिगोष्ठीप्रतिबद्धसौष्ठवै-
र्विदग्धलोकैरिव कर्णशालिभिः ।
तदाहवे सत्कविकाव्यपायिभि-
र्दधे मुखश्रीः पृतनातुरङ्गमैः ॥५२॥

3845 ससेनया जगन्मनोमृदुर्वशीकया जितः ।
अविस्खलंस्तदा रुषामृदुर्वशी कयाजितः ॥५३॥

---

१. C तस्योदखानिषत । २. C शोमां ।

3846 गुरुमुष्टिघातपरिपीडितं जवात्
विनिपात्य वृत्रमथ कुञ्जराननः ।
परशुप्रहारविकटव्रणोरसं
स सहस्रमायमकरोत्पराङ्मुखम् ॥५४॥

3847 केदारयन्तं समदन्तमाल-
मरातिलोकं शरलाङ्गलानाम् ।
के दारयन्तं समदं तमाल-
नीलं हरिं जेतुमलं बभूवुः ॥५५॥

3848 सविसरासुरसारवसासवे
सुरवरो विवरासुसास्रवः ।
स वरवीरवसावुरुवैरिसू-
रवसरे विरसं विरराम सः ॥५६॥ द्व्यक्षरः

3849 मणिशतकरभासुराङ्गनानां
दितिजचमूघटमानसंसदं सः ।
अकृत च समरं सुराङ्गनाना-
मतनु दधच्छुचिमानसं सदंसः ॥५७॥

3850 जेता वेगांस्तीव्रभा वायवीयान्
वृत्रारातेर्वद्धभावा यवीयान् ।
श्रुत्वा हृष्यत्तत्र चाणूरपीडाः
प्राक्कर्तासौ दृप्तचाणूरपीडाः ॥५८॥

3851 भात्याकाशश्यामले यस्य देहे
वासश्छाया सन्नवा पीतरङ्गा ।
पर्यष्कारि द्वारिका येन पूर्वं
नानाहर्म्यासन्नवापीतरङ्गा ॥५९॥

3852 रणे नता येन रिपोर्वरूथिनी
सहासमासन्नवधेऽनुकम्पिता ।
शशंस यः सीरिणमाहवक्रिया
सहासमासन्नवधेनुकं पिता ॥६०॥

3853 संप्रत्यरातिपृतनाः सहसा विजित्य
ता रक्ष वीर ! समरे चकिताः समायाः ।
इत्यर्थिवाग्भिरजहात्स तु तास्ततीर्न
तारक्षवीरसमरेचकिताः समायाः ॥६१॥

3854 वहति करतलेन बद्धरागं
रणदलि तामरसं च यः सहासम् ।
युधि मयतनयोऽमुना निजघ्ने
रणदलितामरसञ्चयः सहासम् ॥६२॥

3855 नाकौकसां विदधतीः पृतनास्तदानीं
व्यापार्यमाणकरवाललता निकृत्ताः ।
सेनाः शरैर्दनुभुवोऽनुगतो बलेन
व्यापार्यमाणकरवाललता निकृत्ताः ॥६३॥

3856 दिशि दिशि शमयद्भिर्दूरमन्वीयमानं
दिवसकरमरीणां चामरैर्वीज्यमानम् ।
समिति रिपुगणोऽन्यै[1]र्नातिसंरम्भवेगा-
दिव सकरमरीणा चामरैर्वीज्यमानम् ॥६४॥

3857 स्थितवति तत्र गोप्तरि भटैस्त्रिदशाङ्गनाब्जिनी
सवितरि तुङ्गतोदयमनेकपराजयोर्जिता ।
दितिजगणस्य भीतिमतिदुर्धरतां दधौ क्रियाः
स वितरितुं गतोऽदयमनेकपराजयोर्जिताः ॥६५॥

---

१. C omits यैः ।

3858 बिभ्रद्भुजौ मुररिपुः प्रतिपक्षभानु-
राहू तदा नवचमूरवधूयमानाः ।
आशिश्वसत्सुमनसां पृतनाश्च भूमि-
राहूतदानवचमूरवधूयमानाः ॥६६॥

3859 त्रिदिववर्त्म घटितान्सहसाहितकम्पया
समदनागमतया तरसा रथिनो दधौ ।
रणमयगहने बलिना रुरुचे श्रिया
समदनागमतयातरसारथिनोदधौ ॥६७॥

3860 पुरोपवनपद्धतीर्वसतिरम्बरस्त्रीश्रिया-
मधूनितरसापपावनतमानसानुत्तमाः ।
प्रविश्य च रतोत्सुका नवतमालवल्लीगृहं
मधूनि तरसा पपावनवमानसानुत्तमाः ॥६८॥

3861 स संयति पतत्त्रिणां निजरुचारिकान्तीर्जय-
न्नमन्दर समांसदोर्जितमदः समायोजयन् ।
व्यथामगमदुद्धतो दितिजमण्डलं मृत्युना
नमन्दरसमांसदोर्जितमदः समायोजयन् ॥६९॥

3862 दिशि दिशि वीरभद्र उचितान्निवेश्य [1]पृतना भटान्विदलय-
न्प्रमथनवस्तुतोत्र [2]समतासखेदमकरोदरातिगजवान् ।
विगलितसंप्रहाररभसं[3] दधानममरारिसैन्यमतनु-
प्रमथनवस्तुतोत्र समतासखेदमकरो दरातिगजवान् ॥७०॥

3863 सश्रीमानमृदुर्निसर्गगहने दर्पान्निकृत्तद्विषो
वंश्यश्चारुयशस्तदा दधदधः सद्यो हृतश्रीरिपोः ।
दत्तार्घो नयमार्गगोचरगुणः पुष्टीभवन्मारणे
सेवानम्रलसत्कराञ्जलिपुटैर्वीतारिशङ्कं सुरैः ॥७१॥

---

१. C पृतनापटान् ।　　२. C ममता for समता ।
३. C omits रभसम् ।

3864 इत्थं दुर्धरदर्पदोर्द्रुमतया मृद्नंश्चमूरातता
भास्वान्सानुमति क्षपा इव तदा सुदारशोभानुगः।
टाङ्कारैर्व्यधितारिसंहति धनुर्व्रत्यान्त कीर्तौ[1] रणे
यत्नासञ्जितशिञ्जिनीकसरटः[2] कामं तमध्वंसयत् ॥७२॥

युगलकम्

3865 श्री दुर्गदत्तवंश्यः सहृदयगोष्ठीरसेन ललिताङ्कम्।
इदममृतभानुसूनुर्व्यधत्त रत्नाकरः काव्यम् ॥७३॥　　इत्येतद्वुत्थार्या

3866 आसन् रणे विदलिताः करिणां यशांसि
मन्दा रदा महति भीरुचितेऽनपेते।
रागाम्बुधौ मुदितदेववधूकृताभि-
र्मन्दारदामहतिभी रुचितेन पेते ॥७४॥

3867 रणभुवमधुना जयाशंसया दोर्द्रुमालम्बनो दारयन्विद्विषोऽत्यूर्जिता
ननु विकशलितापदोसन्नया सङ्गरक्षोभया नुत्तमोहेति भीरूढया।
ननु विकशलितापदोसन्नयासङ्गरक्षोभया नुत्तमोहेतिभीरूढया
किमिव बत भियेति भेरीरवैरभ्यधायीव कोणाहतिप्रस्तुतैर्युद्भुवा
॥७५॥

3868 इत्थं वीराहतसुरचमूर्दत्तहस्तावलम्ब-
स्वर्गारोहिप्रमुदितभटास्तस्य नाकारिसैन्यैः।
श्च्योतद्दानासवसरभसापानलोलालिमाला-
सान्द्रच्छायासितमुखपटोद्दामदिक्कुञ्जरश्रीः ॥७६॥

3869 नानाधुत्यागपक्षे सभरसरभसक्षेपगत्या धुनाना
नादासक्तारणत्राविरलबलरवित्राणरक्ता सदाना।
नाधावत्सादिपक्षेतरसरसरतक्षेपदित्सावधाना
नाहासक्तारिरुग्भीमुदसरसदमुग्भीरुरिक्ता सहाना ॥७७॥

स्रग्धरयानुलोमप्रतिलोमाभ्यां चक्रचतुष्टयम्

---

१. C तान्तकीर्ते। 　　२. C मरजः।

3870 तावच्च शंभुभृकुटी निभृतैकमुख्या
संग्रामकानन-कराल-तमालवल्ल्या ।
चामुण्डया विकटविक्रमसिन्धुवीच्या
प्रास्तावि दैत्यदलने युधि कोऽपि कोपः ॥७८॥

3871 विगलितदानवसार्थं भयशुष्ककरीन्द्रकरटदानवसार्थम् ।
चक्रेऽन्धितान्धकबलं तया समीकं यमस्य बाहुकबलम् ॥७९॥

3872 चण्डीदोर्दण्डचण्ड-प्रसरसरभसोत्तम्भितास्त्र-प्रबन्ध-
व्यापारापारसीदद्दितिदनुतनुजानीकसङ्कीर्णमध्या ।
जज्ञे सा तत्क्षणेन क्षतजनदनदीभग्नसुद्विग्नलग्न-
प्रांशुस्तम्बेरमाश्वा समरवसुमती क्रीडनं कालरात्र्याः ॥८०॥

3873 साराविष्टाभिसारा जनिततनिजक्रोधदीप्रावसारा
सारावप्रासिशूराहरहरणरहः स्वर्गकन्या विशालाः ।
शालाविन्यायकश्रीरनममनरव्रातयुक्ता समासा
सामासक्ता यदासीदमतशतपदच्छेदवृष्टाविरासा ॥८१॥
षोडशदलपद्मबन्धः

3874 रत्नाद्रौ चण्डिकाया विकटकरिकटाट्टालकुट्टाककोटि-
त्रुट्यट्टांकारिटङ्कक्रकचकरकरारावगुर्वी रणोर्वी ।
प्रेङ्खत्खड्गाग्रकृत्तप्रकटभटशिरः पीवरस्कन्धचक्र-
क्रीडान्यश्चत्कबन्धक्रमविधुरधराघोरबन्धा तदाभूत् ॥८२॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये
चण्डिकासमराक्षेपो नाम षट्चत्वारिंशः सर्गः ।

---

3875 सङ्ग्राममूर्ध्नि दलितासुरचक्रवाला-
मालोक्य तत्र [1]विकसत्पुलकप्रबन्धाः ।
आबद्धगोचरपरिष्ठितवाक्प्रपञ्चं
सन्तुष्टुवुर्भगवतीमिति सिद्धसाध्याः ॥१॥

3876 किं चित्रमत्र दलितं रिपुचक्रवाल-
मेतत्त्वया जननि ! यत्प्रसभं रणाग्रे ।
निर्भिन्दती भवनवर्तिनिशान्धकार-
माश्चर्यधाम न हि दीपशिखा कदाचित् ॥२॥

3877 दोर्दण्डदृप्तमनसः सुभटा विपक्ष-
मन्येऽपि यद्रणमुखेषु पराजयन्ते ।
तच्छक्तिरूपमनघस्थिति सं....
[2]....संभागपरमाणुविजृम्भितं ते ॥३॥

3878 दैत्यैः पुरा सुरचमूषु विनिर्जितासु
तद्गुप्तिकारणवशादसमाप्तशक्तिः ।
ध्यात्वा सनातनपदं किल शङ्करेण
सृष्टासि ! नान्यजितजीवनिबन्धवृत्तिः ॥४॥

3879 निस्त्रिंशमुद्वहसि सम्प्रति नीलकण्ठ-
कण्ठप्रभासदृश इत्यनुरागहेतोः ।
हुङ्कारसम्भ्रचलत्सकलाततयाति-
चक्रा न जातु रणलालसया पुनस्त्वम् ॥५॥

---

१. B विलसत् for विकसत् । २. A, B, C left it blank.

3880 आयोधनेषु सकलामरचक्रवालै-
रालोकिता त्वमसुराधिपरङ्गमङ्गे[1]।
विस्तारिदर्पणमिवोदरदेशलग्न-
मभ्रङ्कषोष्णकरमण्डलमुद्वहन्ती ॥६॥

3881 कार्कश्यमश्मनिकरादिव संयुगेषु
दूर्वाप्रवालकलयादिव रङ्गमङ्गे[2]।
सङ्क्रान्तिमापदिव देवि ! हिमस्थलीभ्यो
हासच्छविस्तव तुषारगिरेर्विपाण्डुः ॥७॥

3882 मार्गं पुराकिल सहस्ररुचो रुरुत्सु-
रुद्यन्नगस्त्यमुनिनापि निषिद्धवृत्तिः।
विन्ध्याचलस्त्वयि गुहागृहभाजि सप्त-
लोकाधिकं ध्रुवमवाप समुन्नतत्वम् ॥८॥

3883 सञ्चिन्त्य रूपमतुलं तव पुष्पकेतु-
दाहानुतापवशतः श्वसितोष्णवाताम्।
आकृष्टकण्ठकुहरास्पदकालकूट-
कूटानलानिव मुमोच मृगाङ्कमौलिः ॥९॥

3884 सञ्जाजिरं तव नभश्चरचक्रवाल-
[3]पुष्पोपकारनिपतन्मधुपावलीकम्।
विच्छिन्न-भक्त-भवबन्धनलोहपाश-
नीलावकीर्णमिव राजति मेकलाद्रौ ॥१०॥

3885 निस्त्रिंशघात-विनिकृत्त-पशूपहार-
जीवा इवाप्य सुगतिं परिदीप्यमानाः।
विन्ध्याद्रिकन्दरजुषो भुवनान्धकार-
निर्भेदिनोऽन्तिगतास्तव भान्ति दीपाः ॥११॥

---

१. B, leaves blank। २. B कान्तिरंगे for रङ्गमङ्गे।
३. B पुष्पोपहार for पुष्पोपकार।

3886 ब्रह्माण्डशङ्खमुपपादितकण्ठभाग-
रन्ध्रं विनिःश्वसितमाहतपूर्णगर्भम्[1]।
संहाररात्रिषु विपूरयसि ! त्वमेत-
मालम्ब्य भैरवपुः प्रसभं कराभ्याम् ॥१२॥

3887 आविष्कृत-प्रलय-दुर्धर-कालरात्रि-
मूर्तेरुदग्रविकटावयवान्तरेषु।
पर्याप्तिमेति तव संहृतसप्तलोक-
लोकास्थि-सम्भृति-शतैरपि मण्डनं किम् ? ॥१३॥

3888 निर्मांसताधवलराहुशिरः कपाल-
कांस्याग्रपीत-भुवनक्षतजासवश्रीः।
विश्राणयस्यतनुतत्पिशितावदंश-
लेशानुविद्धदशनास्त्र न कस्य भीतिम् ॥१४॥

3889 [2]आहन्यमान-कनकाचल-लाडनोत्थ-
नादानुबन्ध-बधिरीकृत-सप्तलोकम्।
कल्याणि ! वादयसि कालविभावरीषु
पद्मासनाण्ड-विकटोर्ध्व-[3]कवाटघण्टाम् ॥१५॥

3890 हेला विनिःश्वसित-पीतकठोरकण्ठ-
नाडी-निरर्गलगलत्क्षयसागराम्भः।
रूपं बिभर्षि वलयीकृतसप्तसंख्य-
द्वीपोष्णरश्मि-किरणावधि-शैलचक्रम् ॥१६॥

3891 संहारकालरभसोत्थित-धूमकेतु-
निर्दग्ध-सप्तभुवनेन्धनजो न मातः !।
मन्ये ललाटतटपुण्ड्रकमात्रकेऽपि
पर्याप्तिमेति तव भस्मपरागपुञ्जः ॥१७॥

---

१. B मारुतपूर्णगर्भम् for माहतपूर्णगर्भम्।
२. B, C आतन्यमान for अहन्यमान।
३. B, C कपालघण्टाम् for कवाटघण्टाम्।

3892　औवों निरर्गल-करालशिखा-सहस्र-
　　भस्मीकृतार्णव-जलस्तव-जाठरोऽग्निः ।
श्वासास्तवैव मरुतः प्रलयागमेषु
　　हेलानिपातित-कुलाचल-चक्रवालाः ॥१८॥

3893　वक्षःस्थली-विनिमितामर-शैलदण्ड-
　　लग्नेन्दुखण्ड-नवभास्वदलाबु-पात्राम् ।
आश्रावयस्यतनुशेष-शरीरतन्त्र-
　　तन्त्रीगुणां प्रलयरात्रिषु [1]काण्डवीणाम् ॥१९॥

3894　सङ्कल्पकलिपत-विशङ्कट-कण्ठभाग-
　　मन्तःस्थ-सप्तजलसेवधि-वारिपूर्णम् ।
ब्रह्माण्डमेव सहसा विदधासि चण्डि !
　　लीलाकमण्डलुमिमं प्रलयागमेषु ॥२०॥

3895　वैकुण्ठचक्र-परिकल्पित-शंखपत्र-
　　संरुद्धरन्ध्र-विकराल-विलम्बिपाशम् ।
कर्णे विभर्षि भगवत्यभिराममेक-
　　मन्यं च हेमगिरिकाञ्चनतालपत्त्रम् ॥२१॥

3896　अभ्युच्छ्वसत्फणपलाश-कराल-जिह्व-
　　प्रत्यग्रपक्ष्म-निकुरम्ब-शरीरनालम् ।
कर्णेऽवतंसयसि पाण्डुरपुण्डरीक-
　　शोभं भवानि ! भुजगाधिपमप्यनन्तम् ॥२२॥

3897　अस्तोदयाद्रि-नमितोन्नमितार्क-चन्द्र-
　　विस्तीर्ण-विम्बमणि-कन्दुककीर्णहस्ता ।
चिक्रीडिथ त्वमिह चण्डि ! कुमारभाव-
　　मातस्थुषी भुवनविस्मयनीयमूर्तिः ॥२३॥

---

१. C कौण्डवीणाम् ।

3898 तारकवणड्डमरुका करुसीषु चण्डि !
संहारकालमुदिता विचरस्यमन्दम् ।
स्कन्धाधिरोपितविटङ्कविरञ्चिकाय-
कङ्काल भागनिनदत्समवर्तिघण्टा ॥२४॥

3899 एषा विभाति तव देवि ! कपालपङ्क्ति-
रुत्तंसिता दलितशङ्खविपाण्डुरत्विट् ।
संवर्तकाल-कलितोत्कट-वह्निहेति-
भस्मीकृताखिल-कुलाचल-मण्डलश्रीः ॥२५॥

3900 रक्तच्छटाशबलकुञ्जरराजकृत्ति-
सञ्छादितस्तनतटाम्ब ! विभासि काली ।
पौरन्दरी दिगिव बालदिवाकरांसु
भिन्नान्तरालतिमिरस्थगितोदयाद्रिः ॥२६॥

3901 आभीलतां व्रजसि ! पाणिनखाग्रशुक्ति-
लीलागृहीत-सकलोद्धत-सप्तसिन्धुः ।
पादाङ्गदीकृत-कराल-सहस्ररश्मि
धामावधिक्षितितला प्रलयागमेषु ॥२७॥

3902 योगेश्वरीरुचिर-चक्रकराल-नाभि-
बद्धास्थ भैरवहृदङ्कगतां जनस्त्वाम् ।
ध्यायन्नसङ्कलित-सङ्कट-शोकशङ्कु-
शङ्कः शशाङ्कमुखि ! शङ्करतामुपैति ॥२८॥

3903 ब्रह्मप्रपञ्च-परिनिष्ठित-भेदसाम-
गायन्त्यविप्लुतमनाः प्रलयोत्सवाग्रे ।
शर्वाणि ! वादयसि दीधितिचक्रवाल-
तन्त्रीगुणाञ्चितशशाङ्ककलाविपञ्चीम् ॥२९॥

3904 विस्पष्टपाटलदल-प्रकरायमाण-
माणिक्यदीधिति-विटङ्कतलाङ्गुलीकः ।
अभ्युद्वहन्भुवनपङ्कजमेष भाति
हस्तस्तवैवभुजगाधिपभोगदीर्घः ॥३०॥

3905 क्लेशप्रतान-गहनाप्रतिपन्नपार-
संसारकानन-कठोर-कुठारधारा ।
स्फूर्जत्यनुत्तरतिरस्कृततापवर्त्मे
मेघामृतस्त्रुतिरहो त्वयि भक्तिरेका ॥३१॥

3906 संस्पृश्यमानमभितस्तुहिनोत्करेण
यद्युत्सृजेन्न कमलं कमलाक्षि ! लक्ष्मीम् ।
तेन स्फुरन्नखमणिप्रभयावलीढः
सम्प्राप्नुयाच्चरण एष तवोपमानम् ॥३२॥

3907 सन्देहितारुण-दलाङ्गुलि-पादपद्म-
पीठोत्थ-सौरभ-भराकुलितं विभाति ।
सम्भाव्य कृष्णरजनीति समागतं त्वां
सेवारसात्तम इवातनु भृङ्गचक्रम् ॥३३॥

3908 संवादिबिम्बफलमुज्ज्वलकम्बुकण्ठि !
ताम्बूलरागपरिपाटलमोष्ठयुग्मम् ।
आभासि ! तत्क्षणनिपीतपशूपहार-
विष्यन्दिशोणितरसार्द्रमिवोद्वहन्ती ॥३४॥

3909 अर्धं शशाङ्कशकलाभरणेन गाढ-
रागोपगूढमनसा वपुषोऽर्पितं ते ।
निःशेषमेव हृदयं पुनरव्यलीक-
मानोपघातघटनं दिदिशे त्वयास्मै ॥३५॥

3910 प्रेङ्खत्फणामणि-मयूखशिखाभिलक्ष्य-
प्रालम्बकम्बु-रशनास्पदमेचकाङ्घ्रिः ।
काली विभासि ! भगवत्युपहारपीत-
धूपोत्थधूमपरिणामवशादिव त्वम् ॥३६॥

3911 [1]उष्णीषबन्ध-दृढपीडितकण्ठपीठ-
फुल्लत्फणाफलकवासुकिफूत्कृतोत्थाः ।
त्वां चण्डि ! पावकशिखाः परितोषयन्ति
संशोषिताभ्रसरितः शिरसि स्मरारेः ॥३७॥

3912 भासि त्वमम्ब ! रजनी शशलक्ष्मशार-
मध्यं दधत्यसकलामृतरश्मिबिम्बम् ।
विस्पष्टपङ्कपटलाविलरन्ध्रमार्ग-
तिर्यक्स्थित-स्फुरदरण्य-कपालकल्पम् ॥३८॥

3913 प्रेङ्खज्जपाकुसुम-कोमल-चन्दनाम्बु-
चर्चाङ्कपीन-परिणाहिपयोधरश्रीः ।
शोभां बिभर्षि ! भगवत्युपगूढसांध्य
रागेव कृष्णरजनीत्वमुपागता त्वम् ॥३९॥

3914 [2]सेवाश्रितोज्ज्वलकराम्बुरुहाश्रयं ते
तत्संश्रयात्परिजनत्वमिवोपनेतुम् ।
छायान्धकारित-गुहागृहगर्भभागा
वीराः करालकरवाललता दिशन्ति ॥४०॥

3915 आलिङ्गिता इव च वीरनिखातखड्ग-
पट्टांशुभिर्जननि ! विन्ध्यगुहानिकेतात् ।
लक्ष्मीं वहन्ति शबराः सजलाम्बुवाह-
च्छायाः कृतार्धविधयस्तव निष्पतन्तः ॥४१॥

---

१. B, C उष्णीषवद्ध for उष्णीषबन्ध ।	२. C सेवाव्रतोज्ज्वल ।

3916 अङ्काधिरूढ-गुहचन्द्रकिणस्तवाम्ब[1]
नृत्तोपहार-सविकास-शिखण्डखण्डाः ।
विन्ध्याद्रिकन्दर-गुहागुह-सन्निवेश-
भाजो वहन्ति शिखिनः परिवारलीलाम् ॥४२॥

3917 निस्त्रिंशघात-विनिकृत्तपशूपहार-
रक्तच्छटाच्छुरणशोभि गृहाजिरं ते ।
धत्ते हरप्रणतिरोषगृहीतसंध्या
बन्दीशतान्वितमिवानिशमम्ब ! लक्ष्मीम् ॥४३॥

3918 त्वत्तः प्रभावमहिता भुवनत्रयस्य
नानाफलप्रसवसंभृतिहेतुभूताः ।
विद्याः प्रसूतिमसमामधि जग्मुरम्ब !
हेमाद्रिसानुसरणेरिव कल्पवल्ल्यः ॥४४॥

3919 तत्त्वत्रयीकृतपदार्थविभेदवर्ग-
निःशेषवाङ्मय-निबन्धन-वर्णराशिम् ।
स्वर्गापवर्ग-फलसंपदनन्यहेतु-
माम्नायमातरमुशन्ति पुराविदस्त्वाम् ॥४५॥

3920 सर्वप्रपञ्च-परिवर्जित-निर्विकार-
शान्तातिवृत्त-परतत्त्व-शिवात्मवृत्तिः ।
सूक्ष्मातिसूक्ष्मगहनप्रकृतिः शिखेति
सौषुप्तमण्डलगता परिदीप्यसे ! त्वम् ॥४६॥

3921 लोकन्त्रिसृक्षुरधितिष्ठति यामभीक्ष्ण
मीशस्त्वया प्रकृतिकारणतां दधत्या ।
ग्रन्थौ स्थितं पुटपरम्परया त्वयादि-
मध्यावसानरहितां स्थितिमीयिवत्या ॥४७॥

---

१. C तयात्तु ।

3922 [१]विस्पष्टसप्तदशकस्थिति गौरि ! लिङ्ग-
माश्रित्य तिष्ठसि विभोः फलभोक्तृशक्तिः ।
ज्ञानात्मनस्त्वमखिलेषु च विग्रहेषु
चिद्रूपतामुपगता किल भौतिकेषु ॥४८॥

3923 क्लेशेन्धनोत्करनिरर्गलदाववह्नि-
ज्वालाहतावतमसा किल भावना त्वम् ।
अभ्यासयोगवशतो जननी जिनाना-
मालोकहेतुरुदिता जिनशासनस्थैः ॥४९॥

3924 बोधिप्रकर्षमधिरूढवतो जिनस्य
सोपानपङ्क्तिरुदिता मुदितादिभूमिः ।
स्पष्टप्रकारयुगलाधिमुखं समाधे-
रभ्रंशभाग्भुवनधारिणि ! धारणी त्वम् ! ॥५०॥

3925 क्लेशेन्धनौघघटनास्रववर्त्मवह्नि-
ज्वाला जिनस्य जननीत्वमुपोढमोहा ।
[२]प्रज्ञा त्वमेव हतसंतमसाम्ब ! तस्य
जैनैरभीक्ष्णमुदिता भवभङ्गहेतुः ॥५१॥

3826 अक्षुण्णमार्गयुग-भङ्गदशाव्यतीत-
विस्पष्टमार्गगति-वर्त्मरथाधिरूढैः ।
त्वं [३]कीर्तिताभयनिरात्मकता[४]वलग्न-
रूपा भवानि ! मतिपारमितेति बौद्धैः ॥५२॥

3927 क्लेश प्रतान-गहन-प्रतिबन्धशून्य-
स्कन्धप्रवाहपरिहारिनिमित्तमेकः ।
अष्टाङ्ग एष परिनिर्वृतये त्वयैव
संदर्शितोऽतिगहनः सुगतस्य मार्गः ॥५३॥

---

१. C विस्पष्टमष्टदशक ।  २. C प्रज्ञत्वमेव ।
३. C कीर्तितोभय ।  ४. C निरात्मकभावलग्न ।

3928 गर्भीकृतावधुत-संतमसानुबन्ध-
संवित्प्रकाशविषमीकृतयानमार्गैः ।
आर्यावलोकभुवि लोकितसंभवा च
तारा त्वमम्ब ! कथिताब्जकुलप्रसूतिः ॥५४॥

3929 प्राप्ताभिसंधिपरतामनुवृत्तिलग्न-
गौणस्थितिः [1]स्थितसितातिशयादभीक्ष्णम् ।
विद्येति सर्वबहुलाखिलदृष्टिसंज्ञा
सङ्कर्षणी निगदिता किल शासने त्वम् ॥५५॥

3930 आबध्य यत्र [2]नतिमुत्तम-योगयोग-
भाजि व्रजन्ति पतयोऽधिपतेः सयुक्त्वम् ।
साधारणा त्वमपवर्गफलैकहेतु-
रैकायनैरभिहिता भगवत्यलिङ्गा ॥५६॥

3931 शीर्षैः सहस्रशिरसा पुरुषेण साम-
गीतिर्विभेद-गहन-प्रतिपन्नशाखा ।
त्वं गीयसे श्रुतिसुखा, रुचिरप्रपञ्च-
पञ्चप्रकार-परिनिष्ठित-चारुभक्तिः ॥५७॥

3932 भोगापवर्ग-सुखसाधन-सप्तकोटि-
संख्यानमन्त्र-गणनायकतां दधत्या ।
कृत्स्नं त्वयैव गगनामृतधारयैत-
दाप्याय्यते जगदनेक-गुणप्रपञ्चम् ॥५८॥

3933 [3]शान्ता शिवागमपदं परमेशितुस्त्व-
माद्या कला किलकलात्रितयैकहेतुः ।
तत्त्वं व्यतीत्य भवतीं स्थितिमभ्युपेत्य
दीर्घाजवञ्जवजुषो न भवन्ति मुक्ताः ॥५९॥

१. C स्थितिमिताभिपयादभीक्ष्णम् । २. B, C for नतिमुत्तम् ।
३. C शान्तामिवागमपदम् ।

3934　ब्रह्माननेभ्य उदिता किल पञ्चधा त्वं
पञ्चभ्य एव भुवनत्रयसिद्धिहेतुः ।
विद्याविभावित-विचित्रपवित्रमन्त्र-
स्तोत्रप्रपञ्च-रुचिर-स्थितिरञ्चितश्रीः ॥६०॥

## देव्याः प्रणवात्मकत्वनिरूपणम्

3935　[1]यं ज्ञानलिङ्गमतिवृत्तविकल्पचक्र-
मुत्क्रान्तमुत्तमधियः सकलार्थचित्राः ।
उद्गीथमाहुरभितोऽभिविधाय विश्व-
मेकं स्थितं सकल-साधन-धर्मशून्यम् ॥६१॥

3936　व्याप्य स्थितो जगति यः सकला गिरश्च
यश्च प्रविश्य किल ता अपि धातुरीड्यम् ।
यं सर्वतोमुखमथर्वगिरश्च हेतु-
[2]मालम्बमूलमवदातधियो [3]वदन्ति ॥६२॥

3937　निर्भिद्य गण्डतटमात्मभुवः किलाशु
येनोदयाय जगतामुदियायि पूर्वम् ।
[4]यद्रूपमाश्रित-विवर्त-विकारभेदं
ब्रह्म द्विधास्थितमुशन्ति परावरज्ञाः ॥६३॥

3938　यद्द्वारमुष्णकिरणस्य वदन्ति सौर-
मौदुम्बरं च कवयः किल तालुसाद्मम् ।
[5]यस्त्रिप्रकारकलनासुभगत्वमेति
योगाभियुक्तमनसां पदमव्यवस्थम् ॥६४॥

---

१. B ये for यं ।　　२. C हेतुजालस्यमूलमव ।
३. C भवन्ति for वदन्ति ।　　४. C यत्पूर्वमाश्रित for यद्रूपमाश्रित ।
५. B तन्त्रप्रकार for यस्त्रिप्रकार ।

3939 व्यापीति, हंस इति, तार इति, स्म शुक्र-
[1]इत्युच्यते य इह वैद्युत इत्यनन्तः।
त्रिस्थानतादि विषयं च यमामनन्ति
ब्रह्मामलं त्रिविधभेदविवर्तियुक्ताः ॥६५॥

3940 ब्रह्मा महेश्वरगुरुश्च पुरा किलैत-
दाकाशवत्स्वकृतसन्निधिमेत्य साङ्गम्।
वेदं प्रजापतय ऊचतुरेकमेव
तस्यापि यो मुखमिति प्रथितः पृथिव्याम् ॥६६॥

3941 निर्दिश्यते जगति यः किल शब्दतत्त्व-
[2]भावार्थनाम-सुगुण-प्रणिधानदृश्यः।
यस्मिन्निलीनमनसः सुखदुःखमोह-
संवेदनेन रहिताश्च भवन्ति युक्ताः ॥६७॥

3942 यः कीर्त्यते श्रुतिषु चोपनिषत्स्वशेष-
विद्यान्तरेषु च फलद्वयहेतुरेकः।
उत्थापित-प्रगुण-संस्कृतयश्च येन
तद्वाच्यतामुपगताः किल सन्ति वेदाः ॥६८॥

3943 ब्रह्मादिदैवतमयं परमं पवित्र-
मिच्छन्ति यं सुतपसामयनं द्विजेन्द्राः।
आरुह्य यं सपदि कूबरिणं व्रजन्ति
मार्गं सुदुर्गममनर्गलमेव युक्ताः ॥६९॥

3944 यं संविदादिमयमाहुरनेकभेदं
यश्चाक्षुषः पुरुष इत्यभिधीयते च।
[3]यं तैत्तरीयक उशन्ति रसादिकोष[4]-
चक्रस्य हेतुमवदातधियश्च कोषम् ॥७०॥

---

१. C मम्युच्यते for इत्युच्यते। २. C भावार्गतापसु।
३. B, C यत्तैत्तरीयक for यं तैत्तरीयक।
४. B, C रमादिकोश for रसादिकोष।

3945 अस्पष्टवैकृत-विविक्त-विकारचक्र-
हेतोर्नियम्य न कदाचिदतादवस्थ्यम् ।
कृच्छ्रेण नाभिहृदयाम्बुज-कोटरस्थं
पश्यन्त्यविप्लुत-समाधिदृशो [1]यमार्याः ॥७१॥

3946 विस्पष्टमात्मनिरताः सुधियो विकल्प-
शून्यं समाधिमवलम्ब्य [2]समूढसत्त्वाः ।
विन्दन्ति यं वितमसः किल निस्तरङ्ग-
भङ्गोदधि-प्रतिनिधि-स्थितमात्मसत्त्वम्[3] ॥७२॥

3947 स्वर्गोपभोग-सुखदान-निरर्गलं य-
मिच्छन्ति यज्ञपुरुषं मुनयः षडङ्गम् ।
क्षिप्ताहुतिः शिखिमुखे किल यस्य सम्य-
गुत्सृष्टवृष्टिमुपतिष्ठत उष्णरश्मिम् ॥७३॥

3948 स्यात्कारणं यदि न शाश्वतिकत्वयुक्त-
मुच्येत नित्यमिति चेन्नहि कारणं यत ।
आक्षेपयुग्ममिति बाधकमानशून्यं
शक्तिष्वभीक्ष्णमविरोपितवृत्ति यस्य ॥७४॥

3949 तादात्म्यभेदरहितावनिचन्द्रभास्व-
दात्मानिलानलनभःसलिलेन देहे ।
व्याप्याखिलं स्थितवता परमेश्वरेण
येन न्यषेधि जगतोऽपरकर्तृभावः । ॥७५॥

3950 ब्रह्मप्रतिष्ठ-परमाणु-शरीरगर्भ-
बद्धास्पदोन्नत-कुशेशय-कर्णिकाङ्के ।
विश्रान्तमुच्छिख-निपातगतप्रदीप-
दीप्राकृति-प्रतिम-मप्रतिकृत्यवस्थम् ॥७६॥

---

१. C यथा च । २. B च मूढसत्त्वाः ।

३. C स्थितमात्मतत्त्वम् for स्थितमात्मसत्त्वम् ।

3951 घोषाक्षर-स्वरनिराकृतमप्यकण्ठ्य-
तालव्यमव्यय-मनासिक-मप्रतिष्ठम् ।
निःसञ्चर-व्यतिकर-प्रतिसञ्चरात्म-
देहप्रभञ्जन-विशाल-रथाधिरूढम् ॥७७॥

3952 प्रज्ञाघनं स्थिरचतुश्चरणत्वमाप्त-
मद्वैततासमरसं[1] परिमृष्टकूटम् ।
ज्योतिः परं यदमृतं हृदि चाकशीति
नेदिष्ठमप्यविगलत्तमसां दविष्ठम् ॥७८॥

3953 स्थित्यर्थमस्य जगतः कथमप्युपाधि-
भेदादभिन्नमपि यत्प्रतिपन्नभेदम् ।
यच्चापि सत्यमनिशं हृदयप्रतिष्ठ-
मानन्दरूपममृतं मुनयो गृणन्ति ॥७९॥

3954 [2]नो ताम्यते दिशि दिवाकरपावकैर्य-
च्छासा च यस्य सकलं व्यवभास्यतेऽदः ।
विद्यासतत्त्वमिति च प्रकृतिः परैति
शक्तिश्च यस्य भगवानरविन्दनाभः ॥८०॥

3955 वर्णेषु वाचकतया रहितेषु सत्सु
वाक्तत्वमक्रममपाकृत-भेदरूपम् ।
स्फोटाभिधानमिति यं कथयन्ति शाब्दाः[3]
[4]प्रत्यक्षताविकलवस्तु-सतत्त्वयोगाः ॥८१॥

3956 द्रव्यादिभेद-परिकल्पनया प्रमाण-
सूत्रैर्विभज्य भुवि षोडशभेदभिन्नम् ।
व्याख्यातवान् कणचरश्च समक्षमक्ष-
पादश्च यस्य भगवांस्तनुमप्रकम्प्याम् ॥८२॥

---

१. C भाससुरसम् ।　२. A, C omit this श्लोक ।
३. B शब्दाः ।　४. C प्रत्यक्षिताविकल ।

3957 यस्माज्जलादिव च बुद्बुदचक्रवाल-
मेतज्जगत्समुदपादि विभिन्नरूपम् ।
निःशेषबीज-निकरान्तर-लब्धशक्ति-
र्वागीश्वरी च विनिवर्तत एव यस्मात् ॥८३॥

3958 यस्योदपादि मनसः किल शीतरश्मि-
रक्ष्णोंऽशुमान् कटितटादपि चान्तरिक्षम् ।
अव्याकृतो विकुरुते भगवानविद्या-
ग्रन्थिं च यो [1]विनिहितं पुरुषो गुहायाम् ॥८४॥

3959 ज्ञानाग्निविप्रुष इमाः किल यन्मुखोत्थाः
यश्चाक्षरः क्षणमथ क्षरतामुपेतः ।
संयोगतो जगति भागवताद्विभाति
यद्रूपशून्यमपि संहितसर्वरूपम् ॥८५॥

3960 व्यावृत्तिरस्ति न कुतश्चिदपीह यस्य
यस्मादवस्तु-विषयस्थिति-विप्रलब्धाः ।
आविर्भवन्ति विविधस्थिति-हेतुकार्य-
चक्रप्रपञ्च-परिणामयुजः पदार्थाः ॥८६॥

3961 ह्रस्वं न दीर्घमथ न प्लुतमप्यलिङ्ग-
मेकं विभक्तिवचन-प्रतिभागशून्यम् ।
सन्तर्पिताखिल-जगत्परमेण धाम्ना
यच्चास्तितारहित भावविकारशून्यम् ॥८७॥

3962 भोगापवर्ग-फलसाधनहेतुभाव-
मभ्यागता [2]भुवनसाधनतां दधानाः ।
यस्माच्च बिन्दुसरसः किल सप्तमन्त्र-
कोट्योऽम्रसिन्धव इवास्खलिता निरीयुः ॥८८॥

---

१. C विनिहितः for विनिहितम् ।

२. C भुवनपावनताम् for भुवनसाधनताम् ।

3963 आत्मान्तराव-[1]गमवत्त्रितयाप्रतीतौ-
वागात्मनि स्थित इहातिशयेन सूक्ष्मे ।
रूपस्य यः प्रकटनाय निजस्य शब्द-
भावेन भावित-जगत्परिवर्तते स्म ॥८९॥

3964 प्राप्तानिमान् प्रकृतिजानखिलान्विकारा-
न्योऽलङ्करोत्यनिशमप्रविभागिरूपः ।
तीर्थप्रवाहगहनेषु पृथग्विधेषु
ये दृष्टिभेद-विनिबन्धनमामनन्ति ॥९०॥

3965 त्रिस्थानतादियुतमादिविरामशून्यं
विश्वस्य नाभिमचरं चरतो ध्रुवस्य ।
निष्ठ्यूतवाङ्मयमजो हरिरात्मभूश्च
शंसन्ति यं कृतधियो गुरु धारणार्ध्यम् ॥९१॥

3966 ॐ तत्सदित्यमित-तत्परमं[2] तृतीय-
कायावमर्श-गहनागम-बोधिसंवित् ।
आवेदवन्ध्यधृति [3]धूतघनानुपाशो
वागीश्वरी जननि ! स प्रणवो मुखं ते ॥९२॥

द्वात्रिंशद्भिः कुलकम्

3967 नाडीसहस्र-सशिरास्वर गर्भवर्त्म
सञ्चार-चातुरकरी हृदि सन्निविष्टा ।
शक्तिस्त्वमेव परमात्म-परापरार्थ-
ब्रह्मार्क-मण्डल-गमागमगूढगुप्तिः ॥९३॥

3968 स्पष्टीभवत् गगनगञ्जचितिप्रकर्ष-
मात्मीकृताखिल-[4]सतत्त्वगतिप्रपञ्चम् ।
कापि त्वमेव ननु [5]दाशबलावबोध-
सत्त्वानुमाय-परमेश्वर-देवताद्या ॥९४॥

---

१. C गमकर्तृतयाप्रतीतौ । २. C तत्परमर्दकीय ।
३. C धूतगणानुपाशो । ४. B मतत्त्वगतिप्रपञ्चम् for सतत्त्वगतिप्रपञ्चम् ।
५. B दाशबलार्थबोध ।

3969 जिह्वा त्रिविष्टपसदाममृतस्य मार्ग-
[१]माज्यं द्विजाञ्जुषुषः शिखिनि प्रदीप्ते ।
यत्तिग्मरश्मिकिरणाः परमस्य पुंसः
स्थानं नयन्ति तदसौ तव शक्तिजृम्भा ॥९५॥

3970 ज्योतिर्मयीमकरणेन्द्रिय-वृत्तिमाद्य-
हंसाक्षरस्थितिमयीं विहितामयार्घ्याम् ।
श्रीकण्ठमुख्य-गुरुषोडशवीरमूर्ति-
मुत्फुल्लशक्ति-कमलासनतामुपेताम् ॥९६॥

3971 शक्तित्रय-[२]प्रथित-शूलकरां शिवाय
धाम्ना जगन्ति सकलान्यवभासयन्तीम् ।
कल्लोल-सङ्कुल-परामृतसम्पदं त्वां
ध्यायन्ति भैरवतनुं किल कौलिकास्थाः ॥९७॥

3972 प्रत्यङ्गसङ्गत[३]-पतङ्ग-कराभिभावि-
कोटित्रयोन्नत-विशङ्कटतिग्महेतिः ।
सूक्ष्मा सनातनतनुश्च ननु त्वमेव[४]-
मायाकलासु शकलीकरणैकहेतुः ॥९८॥

3973 [५]चक्राश्रितत्रिशिख-कोटि-गतारविन्द-
[६]सत्कर्णिकासनगतामिह कौलिकस्त्वाम्[७] ।
ध्यात्वैति शक्तिपतितां स्थिरभैरवाङ्क-
वृत्तिं परापरविभेदवर्ती जनोऽयम् ॥९९॥

---

१. B माज्यद्विषाम् ।　　२. B, C प्रचयशूलकरम् for प्रथितशूलकरम् ।

३. C प्रत्यंगसंगतषडंग for प्रत्यंगसङ्गत पतङ्ग ।　　४. B, C तनुत्वमेत्र ।

५. B चक्राश्रितत्रिशिखकोटि for चक्राश्रितत्रिशिखकोटि ।

६. B सत्कर्णिकामनुगतामितकौलिकत्वम् ।

७. C omits कौलिकस्त्वाम् ।

3974 आतस्थुषः [1]षडवधिस्थितवर्त्ममातृ-
चक्रस्य चण्डि ! पृथुसूक्ष्मशरीरवृत्तिः[2] ।
ख्याता त्वमेव जगति प्रतिपन्नविश्व-
रूपा किलाक्षरमयी परमेशशक्तिः ॥१००॥

3975 आस्थाय रुद्धभुवना वसुधादिकाश्च
सर्वादिविग्रहतयानवमाः [3]स्फुरन्तीः
तास्ताः क्रिया विदधतो जनताहिताय
शक्तिः किलाप्रतिहता परमेशितुस्त्वम् ॥१०१॥

3976 त्वं कारणस्य जननीति भवानि ! शक्ति-
रुक्तात्मवीर्यगतयाखिलबीजमात्रा ।
विश्वं क्रमेण जननात्मिकया विचित्र-
मेतत्सृजत्यविहतप्रसरं त्वया तत् ॥१०२॥

3977 ब्रह्मा [4]प्रजापतिरवक्षदृगादिवर्त्म-
यद्वह्विवाततरणीः किल यज्ञसिद्ध्यै ।
[5]तस्मिन्नुशन्ति भवतीं भुवनस्य हेतु-
[6]मेकामजां जननि ! [7]लोहितशुक्लकृष्णाम् ॥१०३॥

3978 शक्तिस्त्वमप्रतिहता ननु मानसीति
वागीश्वरी निगदिता सितबिन्दुचित्रा ।
[8]त्वां नाभिमाहुरमृताममृतस्य सप्त-
कौमारिकं किमपि चक्रमुपाश्रितां [9]तु ॥१०४॥

---

१. C omits letter 'ड' । २. C शरीरवृत्तिः ।
३. C स्वमूर्तीः । ४. B, C प्रजापतिरघुक्षदृगादिवर्त्म ।
५. B तस्मिन्नमन्ति for तस्मिन्नुशन्ति । ६. B मेकामिमां for मेकामजां ।
७. B लोहितकृष्णशुक्लाम् । ८. B त्वन्नाभिराहुरमृताः ।
९. त्वम् for त्वां ।

3979 सन्दर्शिताखिल-जगद्गत-गोचरा तु
तत्त्वप्रकाशन-निरर्गलदीपिका त्वम् ।
विद्या परापरविभेदवती भवानि !
भोगापवर्ग-सुखहेतुरविप्लुतार्णोः ॥१०५॥

3980 भिन्नप्रकार-[१]समवाय-विविक्तवर्ण-
संफुल्लशक्ति-कुसुमस्तवकार्चितश्रीः ।
ब्रह्मोत्तमद्रुमलतामलनाभिराम-
[२]विस्तारिमूर्तिरपवर्गफलप्रदा त्वम् ॥१०६॥

3981 [३]मायानिशान्ध-तमसस्तिमितांशु-राशि-
[४]भद्राण्डमण्डलमलं परिदीप्यते यत्[५] ।
तस्य प्रभासि ! भगवत्यतिवृत्तसूर्य-
कोटीसहस्ररुचिरस्तिमितान्धकारा ॥१०७॥

3982 [६]नाकोपभोग-सुखसाधनहेतुरम्ब !
पुंसस्त्वमेव विदिताष्टविधा भवन्ती ।
सूक्ष्मं प्रधानपुरुषान्तरमप्यलक्ष्य-
[७]मेका त्वमेव विशिनष्टि समाधिभाजः ॥१०८॥

3983 सद्वृत्तिसंस्थितिरविप्लुतवर्णवीज-
गर्भा गृहीतहृदया कलधौतगौरी ।
ब्रह्मासनस्य वरवर्णिनि ! कर्णिका त्व-
मस्युन्नता सकलवाङ्मयपङ्कजस्य ॥१०९॥

---

१. B भिन्नप्रकारससराय for भिन्नप्रकारसमवाय ।　२. C विस्तारिपूतिरपवर्ग ।
३. B मायानिशीथतमसि ।　४. C सत्कोणमण्डलमलम् ।
५. B यम् for यत् ।　६. B, C साकोप for नाकोप ।
७. C एकत्वमेव for एका त्वमेव ।

3984 येषां जगत्प्रविचयाधिगमादुपैति
सालोक्यमाशु [१]मतिमत्यनघश्रुतीनाम् ।
त्वं च्छन्दसां किल ! जगत्यधिदेवता त्वम्
तेषामघौघ-शमहेतुरुपाजिहीथाः ॥११०॥

3985 ख्याता महेश्वरनिरञ्जनतां दधाना-
स्तारादिका जगति याः किल शक्तयोऽष्टौ ।
तन्मध्यवृत्तिरमला परिदीप्यसे त्व-
मेकापवर्गसुखदा[२] शिवशक्तिराद्या ॥१११॥

3986 तत्त्वं भवानि ! नरशक्तिशिवात्मकं[३] य[४]-
देतत्त्रिधा स्थितमुशन्ति परावरज्ञाः ।
[५]तत्राण्डमण्डलमलं [६]समबोबुधस्त्व-
माद्या मतिः समनुवर्तितकारणेच्छा ॥११२॥

3987 निःश्रेणिरीशितुरनुग्रहसौष्ठवेन
विश्लेषितत्रिविधबन्धनविप्लवानाम् ।
प्राप्त्यै सनातनपदस्य च षट्प्रकार-
सोपानपद्धतिरसि प्रथिता त्वमूर्ध्वम् ॥११३॥

3988 [७]लोकेष्वनादिनिधनं परिवर्ततेऽर्थ-[८]
तत्त्वेन यत्प्रकृतिकारणशब्दतत्त्वम् ॥
ब्रह्माक्षरं शिवमयं गुणगौरि ! तस्य
निर्जग्मिषानन-[९]तलात्किल मातृका त्वम् ॥११४॥

---

१. B, C पतिमत्यनवद्युतीनाम् । २. B, C एकापवर्गखचिता ।
३. C नवशक्तिशिवात्मकम् । ४. C यमेतत्त्रिधा ।
५. B, C रुद्राण्डलमलमूर्ध्वमधुश्रषा । ६. C मम for सम ।
७. C लोकेश्वरादि । ८. C परिवर्ततेह ।
९. B, C do not put any question tag ।

3989 योगाभियोग-[1]पटवोऽधिसमाधिभाज-
[2]मूर्च्छद्धनस्थितिरणत्कृति-तारदीर्घम्[3]।
उद्गीथमोमिति यदक्षरमामनन्ति
तस्य त्वमेव [4]निरुपप्लुतिरीरयित्री ॥११५॥

3990 [5]ज्योतिर्मुखं वितरणादिषु पञ्चभेद-
विस्पष्टकारकतयाम्ब[6]! विवर्तसे यत्।
ब्रह्म स्वतन्त्रमिह केवलमप्यकर्तृ
तस्य क्रिया फलवती त्वममोघशक्तिः ॥११६॥

3991 यस्य क्षितिश्च चरणौ गगनञ्च नाभिः
श्रोत्रे दिशस्तरणिरीक्षणमग्निरास्यम्।
द्यौरुत्तमाङ्गमपि तस्य विभोः किल त्व-
मुत्तंसितोडुकुसुम-स्तबकोज्ज्वलस्रक् ॥११७॥

3992 पञ्चाशदञ्चिततराक्षर-चक्रवाल-
सम्पूरितोदरगुहा ननु मातृका त्वम्।
तान्येव वाङ्मयनिबन्धनतां गतानि
शिम्बीव गौरि[7]! फलकानि पुरः[8] प्रसूषे[9] ॥११८॥

3993 शक्तिः स्थितोपरिपथः किल षड्विधस्य
भेदत्रयस्थितिमती [10]परमेष्ठिनस्त्वम्।
निर्विप्लवा विकलमन्त्रगणप्ररोह-
हेतुर्नमस्कृतिरिति प्रणवादिरुक्ता॥११९॥

---

१. C omits from ट to धि। २. मूर्छं दधतोदरस्थिति।
३. C.... नाददीर्घम्। ४. C निरुपप्लुतिरीर्धरित्री।
५. C ज्योतिर्मुखे। ६. C तयास्य for तयाम्ब।
७. B गौरफलकानि for गौरि! फलकानि। ८. B पुनः for पुरः।
९. B प्रसूये for प्रसूषे। १०. C परमेष्ठिनस्त्वाम्।

3994 अत्यग्निभग्नतिमिरप्रसरां भवानि !
विप्राः पठन्ति [1]भवतीमिह सामिधेनीम् ।
धेनुस्त्वमप्रतिघकामदुघानघा च
निःशेषनिर्जरमयी प्रथिता मधुश्च्युत् ॥१२०॥

3995 [2]पीत्वाशु दिव्यममृतं सुखिनो भवन्ति
[3]योगाभियोगमनसो यदपोढदुःखा[4]: ।
त्वं तन्मयी भगवति ! क्षयमीयिवांस-
माप्याययस्यनिशमेव हिमांशुमेका[5] ॥१२१॥

3996 शक्त्या त्वयानवमया किल शङ्करस्य
निष्कृष्य पुद्गलगणान् भवबन्धसिन्धोः ।
दीक्षाविरुग्ण-निबिरीसदुरन्तपाश[6]-
चक्रान्नयत्यनिशमूर्ध्वमनन्तनाथः ॥१२२॥

3997 भ्रूमध्यवर्ति भगवत्युपधानयोग-
[7]शक्तिः किलस्फटिकवत् स्फुटचित्रवर्णम् ।
ध्यातं नृणां फलति तत्त्वमनेकधा य-
त्तस्यामला शिवपदस्य शिखा त्वमेका ॥१२३॥

3998 एकाधिकस्फुरदशीतिपदा त्वमेव
विद्यावितानजननी परमेशशक्तिः ।
भोगापवर्गसुखदा[8] भुवनत्रयस्य
त्वय्येव मन्त्रनिचया रचितप्रतिष्ठाः ॥१२४॥

---

१. B, C भवतीमिति for भवतीमिह ।
२. C चीत्वागुधिव्यममृतस् ।
३. C योगारियोगमनसो ।
४. C यदमोघदुःखा ।
५. C omits हिमांशुमेका ।
६. C मृदुरन्तरपाश ।
७. C शक्तेः for शक्तिः ।
८. C मुखरा for सुखदा ।

3999 यत्सूत्रमस्य जगतो बहुधागमश्च
सांख्यैरनादिपरिकल्पितमम्ब[1] ! तत्त्वम् ।
तस्योत्थिता परमकारणतः किलात्म[2]-
[3]लाभैकहेतुरुदिता शिवशासने त्वम् ॥१२५॥

4000 आनन्दरूपममृतं निरुपाख्यमूर्मि-
[4]पङ्कातिगं स्तिमितवारिधिवारिकल्पम् ।
यन्नेति नेत्युपनिषत्स्वभिधीयते च
विज्ञप्तिमात्रमनुपाधि निरीहमन्यैः ॥१२६॥

4001 तस्येशितुः सकलधर्मविनाकृतत्व-
[5]मव्याकृतेः श्रितवतोऽद्भुतवृत्तिरेका ।
व्यापारशक्तिरनघा वसुधादिषु त्व-
मेकैव तिष्ठसि ! विभोर्जगतो नियन्त्री[6] ॥१२७॥

4002 स्थूलात्मनातिशयसूक्ष्मतया च गौरि !
ब्रह्म स्थितं सकलमेकमपि द्विधा यत्[7] ।
ज्योतिर्मयं जननि ! तस्य वपुर्विगाह्य
बाह्यं त्वमन्तरमथ श्रियमेषि शक्तिः ॥१२८॥

4003 सूक्ष्मा [8]कलामृतकलामृतसम्भवा त्व-
मेकेन्द्रियाभिपतित-स्थितियोगदृश्या ।
शीतांशु-भास्कर-हुताशसमुत्थिता च[9]
[10]देदीप्यसेऽन्धतिमिरच्छिदुरामलार्चिः ॥१२९॥

---

१. C मखतरवस् । २. किलाभ for किलात्म ।
३. C लाभवैहेतुरुदिता । ४. B, C शङ्काभिगं for पङ्कातिगम् ।
५. B, C भव्याहुतिः श्रितवतोऽङ्कतवृत्तिरेका । ६. C omits नियन्त्री ।
७. C omits यत् and ज्योतिर्मयम् । ८. C omits कलामृत ।
९. C omits च । १०. C omits दी ।

4004 छन्दोधिदैवतमिति प्रथिता किल त्व-
माध्यात्मिकी हलहलाम्ब ! सरस्वतीति ।
बाह्यापरा तु पृथुपीननितम्बबिम्ब-
केशस्तनाधरयुगादिमनोरमश्रीः ॥१३०॥

4005 आसेदुषी-श्रुतिमुखत्वमनेकभिन्न-
संख्याक्षर-प्रकृतिरप्रकृतिव्यवस्था ।
[1]त्वं ब्रह्मचर्यसमयो च विकासि तेजः
[2]प्राप्ता किल द्विजमुखाम्बुजराजहंसी ॥१३१॥

4006 भास्वत्सहस्रकर-कौस्तुभ-कालकृष्ण-
वक्षः स्थलप्रणयदुर्ललिता विभासि ! ।
लक्ष्मीस्त्वमेव करपल्लवसन्निविष्ट-
पद्मासनाण्डनवविभ्रमपुण्डरीका ॥१३२॥

4007 रात्रिस्त्वमेव नवविभ्रमण्डलाञ्छ-
रत्नायमान-मुडुमण्डल-मुन्मयूखम् ।
मातर्व्यधाः पृथुकपालकवाटसन्धि-
बन्धाभिराम-भुवनाण्डसमुद्गकस्य ॥१३३॥

4008 विस्तारशालि-शशिमण्डल-कर्णिकाङ्क-
तारापथाम्बुरुहमध्यकृत-प्रतिष्ठाम् ।
त्वां चिन्तयन्नमृतवृष्टिमिवाकिरन्ती
मर्त्येति साधकजनः सहसैव मृत्युम् ॥१३४॥

4009 ये वा पिबन्ति सुरभेस्तव तालुदेश-
मध्यस्थितेः स्तनमयीश्वरि ! लम्बमानम् ।
आप्यायितास्तदमृतेन विमुक्तिमार्ग-
मायान्ति ते सकलभावविकारशून्याः ॥१३५॥

---

१. C त्वद्ब्रह्मचर्यसमयी । २. C प्राप्ताखिल ।

4010 संवर्तवारिदघटासु शतह्रदात्व-
मासाद्य विस्फुरसि [1]काञ्चनकाषगौरी ।
अर्चिस्त्वमेव वडवामुखपावकस्य
भस्मीकरोषि सकलानपि सिन्धुनाथान् ॥१३६॥

4011 [2]सङ्कोचशक्ति-शिथिलीकृत-पत्त्रसंधि-
रन्ध्रोत्थित-प्रचुरकेसर-सौरभाणाम् ।
नैशान्धकारभिदुरारुणधाम्नि बोध-
बन्धुस्त्वमेव रुचिराम्बुरुहाकराणाम् ॥१३७॥

4012 त्वं चन्द्रिका, कुमुदकाननचक्रवाल-
निद्रानुबन्ध-शिथिलत्वनिमित्तमिन्दोः ।
लक्ष्मीस्त्वमेव नवकौस्तुभरश्मिशार-
वक्षः स्थलप्रणय-दुर्ललिता मुरारेः ॥१३८॥

4013 ब्राह्मी त्वमुछ्वसितपङ्कजविष्टरस्थ-
मूर्तिर्विमानरचितास्पदराजहंसा ।
[3]विस्पष्टसामघटनैर्वदनैश्चतुर्भि-
राभासि नीतिरिव चारुगुणाभ्युपायैः ॥१३९॥

4014 ताम्बूलपङ्करसरागमिवोष्ठबिम्ब-
मुद्रानिवेश-घटिताविरत-प्रवेशम् ।
शङ्खेन गौरि ! दधता हृदयेऽनुराग-
माभासि ! संयुगमुखेषु च वैष्णवी त्वम् ॥१४०॥

4015 क्रोधाभिताम्र-नयनत्रय-जृम्भमाण-
ज्वालाजडीकृत-पिनाकशिखाकृशानुः[4] ।
माहेश्वरी त्वमसि ! मौलिमृगाङ्करश्मि-
सन्देहितामर-सरिज्जलधौतजूटा ॥१४१॥

---

१. C कामगौरी ।  २. C सङ्कोचमुक्ति ।
३. C विस्पष्टमास ।  ४. C कृशागुः ।

4016 शोभां बिभर्षि शिखिवाहनदेवता त्व-
मम्भोजकोमल-कराग्रगृहीतशक्तिः ।
लीलेव सिन्धुमथनस्य भुजङ्ग-भोग-
[1]काषाहित-कृशिम-मध्यमहीध्रमूर्तिः ॥१४२॥

4017 ज्वालाकलाप-विकटाञ्जलिपीत-दैत्य-
सेनाशतक्षतजवह्नि-कराल-धारम् ।
वज्रं त्वमेव दधती नयनैर्विभासि !
नीलोत्पलैरिव शरद्विकसद्भिरैन्द्री ॥१४३॥

4018 [2]चामुण्डया विरचिताञ्जलि-बद्धहस्त-
शाखानखांशु-भरनिह्नुतमौलिचन्द्रः ।
[3]मातस्त्वया नतशिराः क्रियतेऽस्थि-भस्म-
भाजा श्मशानगृहदेवतयेव शम्भुः ॥१४४॥

4019 विस्तारिपोऽत्र पिहितार्कविजृम्भमाण-
दंष्ट्रांशुभिन्न-तिमिराम्बर-दिङ्मुखश्रीः ।
छायाछलेन भगवत्यवगाढसिन्धु-
मध्ये विराजसि ! वराहमुखी त्वमेव ॥१४५॥

4020 स्वर्गापवर्ग-फलसाधनहेतुभाव-
मातस्थुषो मुखमधीश्वरि ! वेदराशेः ।
गायत्र्यसि ! द्विजजनाननपुण्डरीक-
खण्डाभिराम-विनिकेतनराजहंसी ॥१४६॥

4021 सावित्र्यसि ! स्फुरितवक्त्रमृगाङ्कबिम्ब-
च्छायानिमीलित-विलोचनपङ्कजश्रीः ।
रत्नाक्षसूत्रवलयं परिवर्तयन्ती
ताराकुलं जननि ! रात्रिरिवावभासि ॥१४७॥

---

१. C केशाहित ।　　२. B, C omit the first two lines of this श्लोक ।
३. C प्रातस्त्वया ।

4022 आपीय सप्तभुवनोपहितोपहार-
[1]निर्दग्ध-धूपपटलोत्थितमम्ब ! भूयः ।
आच्छादितार्ककरमुद्गिरसीव धूम-
मूर्ध्वेक्षणानल-शिखावलिकज्जलौघम् ॥१४८॥

4023 [2]सञ्चिन्त्य कासरसुरारिवधं कठोर-
मुत्पश्यति त्रिदशदैत्यगणे कृतान्ते ।
आत्मीय-सैरिभविनाशभियेव चण्डि[3] !
संयच्छति स्म न यमस्त्वयि भक्तिनम्रान् ॥१४९॥

4024 पादानतास्तव भवानि ! नखात्मदर्श-
बिम्बाधिरूढतनुदेहतया प्रपन्नाः ।
सद्यः प्रणाम-सुकृताहितवालखिल्य-
रूपा इव श्रियमुदञ्जलयो भजन्ते ॥१५०॥

4025 फूत्कारमुक्त-हुतभुग्भुजगेन्द्र-हार-
संसक्त-शृङ्खल-पयोधर-कुम्भभागा ।
शोभां बिभर्षि गुरुनिश्चययोगसिद्धि-
रुत्कृष्टमन्त्रगणरत्ननिधानभूस्त्वम् ॥१५१॥

4026 [4]वीक्ष्याग्रतः शबरकृत्तपशूपहार-
रक्तच्छटार्द्र-पिशिताशन-शौण्डतां ते ।
जातास्थिशेषवपुरुज्झितमांसदेह-
यन्त्रा भयादिव विराजति रेवतीयम् ॥१५२॥

4027 शोभां बिभर्ति तव निर्मलदन्तपङ्क्ति-
निर्यन्मयूख-निकुरम्बतयाम्ब ! वक्त्रम् ।
लीलागृहीत-कवलीकृत-मांसकुन्द-
गौरास्थिदण्डमिव लोलकरालजिह्वम् ॥१५३॥

---

१. B निर्दग्धधूम ।　　२. C सञ्चत्यासर ।
३. C देवि for चण्डि ।　　४. B वीक्ष्याकृतः for वीक्ष्याग्रतः ।

4028 पादाग्रकोणहत-दुन्दुभितारनाद-
माकर्ण्य संयुगमुखे तव वज्रपाणेः ।
अन्यानकाहतिपराङ्मुखतां जगाम
नूनं विपक्षरहिता पुनरम्ब ! सेना ॥१५४॥

4029 [1]अन्योन्ययुद्ध-रभसाहति-रुग्णचूडा-
विष्यन्दि-शोणितरसैरिव लङ्घयन्ति ।
संसक्त-विन्ध्यगिरि-कन्दर-मन्दिराग्र-
भागा न शासनविधिं तव ताम्रचूडाः ॥१५५॥

## फलश्रुतिः

4030 प्रेङ्खत्-कपाल-कुसुम-स्रगपोढभोगि-
हारं भयानकमधीश्वरि ! रूपमेतत्[2] ।
चेतः पुनस्तव दयामृदु-सप्तलोक-
भोगापवर्ग-फलसाधन-बद्धकक्षम्[3] ॥१५६॥

4031 पादारविन्दयुग-संस्मरणाभिलाष-
पूतात्मनां तव सुरेश्वरि ! मानवानाम् ।
उत्सृज्य लोहनिगडा निजरूपमाशु-
माणिक्यपादकटकश्रियमाश्रयन्ते ॥१५७॥

4032 वेलातटाचल-नितम्ब-शिलाभिघात-
संशीर्यमाण-विकटोर्मिघटासहस्रः ।
त्वां ध्यायतामनुदिनं प्लवभङ्गसेतु-
मभ्येति नीलमणिकुट्टिमतां पयोधिः ॥१५८॥

---

१. B अन्योन्यरुद्धः । C omits रभसा ।

२. B मानवाना for रूपमेतत् ।

३. C वक्ष्यम् for कक्षम् ।

4033 त्वत्पादयुग्ममनिशं स्मरतां कराल-
धूमावली-शबलितस्फुरदुद्धतार्चिः।
विष्यन्दिसान्द्र-मरकन्दहृतालिवृन्द-
मन्दारकाननतलत्वमुपैति वह्निः ॥१५९॥

4034 विष्यन्दमानमददुर्दिनगण्डभित्ति
भागास्तवाम्ब ! विपिनेष्वपि विद्रवन्ति।
स्तम्बेरमाश्शरणसंस्मरणेन सिंह-
संघातरौद्ररवजातभया इवारात् ॥१६०॥

4035 दंष्ट्राकरालवदनाः स्फुरदग्निहेति-
पिङ्गोर्ध्वकेश-रुचयोऽरुणरौद्रनेत्राः।
अत्यन्तहिंस्रमनसोऽपि तवानतानाम्
नक्तञ्चरा जगति गौरि ! वहन्ति मैत्रीम् ॥१६१॥

4036 त्वत्संश्रयान्गिरिनदीकुहरान्तराल-
वृत्तिः सुरञ्जितमुखो न हिनस्ति नूनम्।
उद्दामदानजल-कुञ्जर-कुम्भकूट-
कुट्टाककोटिकरज-क्रकजोऽपि सिंहः ॥१६२॥

4037 फूत्कारमुक्तदहना विदिदङ्क्षवोऽपि
रोषारुणेक्षणरुचस्त्वयि भक्तिभाजाम्।
आशीविषाः स्फुरितकेसररूपघोर-
जिह्वा वहन्ति विकचोत्पलदामलीलाम् ॥१६३॥

4038 उत्खात-शात-करवाललताः कराल-
कोदण्डदण्डविसरा विजिघांसवोऽपि।
बन्धुत्वमेत्य विनतांस्तव तारयन्ति
कान्तारदुर्गपतितान् ध्रुवमम्ब ! चौराः ॥१६४॥

## उपसंहारः

4039 इत्थं प्रमाविषयलङ्घि लघुत्वमुक्त-
माहात्म्यमोहित-विबोधितविष्टपायै ।
तुभ्यं नमः, प्रतिबलावजितामरेन्द्र-
दृष्टिप्रसादनकृते ननु चण्डिकायै ॥१६५॥

4040 इत्थं स्तुतेस्तव वयं विरताः स्वशक्ति-
शून्यत्वतो न भगवत्यभिलाषभङ्गात् ।
आस्वादयन्त्यमृतशीकरबिन्दुवर्ष-
मभ्येति कस्य रसना विरसामवस्थाम् ॥१६६॥

4041 इति तव गुणवादतः किलास्मा-
ज्जननि ! यदर्जितमस्ति पुण्यजातम् ।
प्रतिसमयमियं त्वदङ्घ्रिपूजा-
भिरतिफला त्वयि तेन नोऽस्तु भक्तिः ॥१६७॥

4042 प्रशमय महामोहातङ्कं ! विधत्स्व सुनिर्मलाम्
दृशमनुदिनं ! कूटीभूतं तिरस्कुरु किल्बिषम् !
विघटय दृढान् पाशग्रन्थीन् ! [1]भवव्यतिषङ्गिणो
न तव विफला पादाम्भोजस्मृतिः प्रणतात्मनाम् ॥१६८॥

4043 इत्थं नाकिनिकायनिर्मितनुति-प्राञ्चत्प्रपञ्चश्रुति-
प्रौढीभूत-शुभ-प्रसाद-विशद-श्रीमण्डना चण्डिका ।
साहङ्कारः-हुताश-हुङ्कृतकृतत्रासा त्रिलोकीसदां
सादं सा दितिजेन्द्र-दानवघटां-निन्येतरामायुधैः ॥१६९॥

१. C व्यभिषङ्गिणो ।

4044 तत्तत्कालं कालरात्रिप्रकोप-
क्रूरारम्भोत्तम्भनं वर्जयद्भिः ।
आसेदेऽन्यैर्दैन्यमप्राप्तदैत्यैः
शौरेः शूरैरन्तिकं रत्नसानौ ॥१७०॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये चण्डीस्तोत्रं नाम सप्तश्चत्वारिंशत् सर्गः ।

---

## अष्टचत्वारिंशः सर्गः

4045 [1]अथ ज्वलत् काञ्चनराजि शृङ्ग-
शैलोपमा दानवदैत्यनाथाः ।
कृशानुपिङ्ग-भृकुटीकराल-
[2]ललाटपट्टा हरिमभ्युपेयुः[3] ॥१॥

4046 युगान्तकालानल-धूमराशि-
रिवाधिरूढः कलधौतशैलम् ।
तार्क्ष्ये स्थितो मेघरुचिर्युयुत्सु-
र्विवल्गतो वल्गुवरूथिनीषु ॥२॥

4047 सासी सुसासा-[4]ससुसाससोऽसा-
[5]ववौववावेव विवो विवीवः ।
नैनान-नेनानु-नना[6] ननोनौ
ररी-ररूरो ररिरार रोरम् ॥३॥ एकाक्षरपादः

4048 तस्याथ निस्त्रिंश-निपात-लून-
सौवर्ण-घर्मारुण-रत्नचूडाः ।
निरीयुरायोधन-मूर्ध्नि काया-
दमर्षवह्नेरिव विस्फुलिङ्गाः ॥४॥

---

१. A, B add ओं in the beginning । २. B ललाटिपट्टा for ललाटपट्टा ।
३. B, C हरिमम्युरेयुः for हरिमम्युषेयुः । ४. B ससससा for ससुसासा ।
५. B ववोववावेघ for ववौववावेव । ६. A, B नैनाननैनाननुना ।

4049 तेन द्विषां संयति देहलग्न-
पतत्त्रिकाश्वासक-लालसानाम् ।
व्यधायि सेना करवालकृत्त-
पतत्त्रिकाश्वासकला-लसानाम् ॥५॥

4050 [1]सलीलमायोधनमूर्ध्नि दर्पा-
त्सन्नाह-मुत्सृष्टवतोऽपि तस्य ।
[2]सुरारि-चक्रीकृत-चापमुक्तैः
शरैः शरीरं विभिदे न धैर्यम् ॥६॥

4051 अवाप्य तैः कर्कशमार्गलाभं
शमार्गलाभङ्ग-कृतिप्रगल्भैः ।
निन्ये न नूनं सरसातलाभै-
रसातलाभैक-परायणत्वम् ॥७॥

4052 स वल्लकी-वाद्यमिवारिसैन्यं
तन्त्री-गुणोत्कर्षवदाहवाग्रे ।
[3]विस्तारिदैन्यं लघुभिः प्रहारै-
श्चिरं वशस्थं गुरुभिश्च चक्रे ॥८॥

4053 अभूतपरीते सुभटैरराति-
[4]विषादवद्भिर्न विषादवद्भिः ।
[5]असृङ्मयीनां प्रभवस्तदानी-
मपाञ्च जन्ये समपाश्चजन्ये ॥९॥

---

१. A, B, C सलीलमभ्यागममूर्ध्नि ।    २. B मुरारिचक्रीकृत ।
३. B, C विस्तारिदैत्यम् for विस्तारिदैन्यम् ।    ४. A, B विषादवद्भिन्नः ।
५. B असंमयीनां for असृङ्मयीनाम् ।

4054 तार्क्ष्ये स्थितस्तत्कनकावदात-
पतत्त्ररश्मिच्छुरितोत्तरीयः ।
सुरारिसेना-दलितास्तदानीं
चमूचरान् स्वानथ शार्ङ्गपाणिः ॥१०॥

4055 नवीन-नानानवनो विवोन्नं
ववावनेना वनवान्विनैनान् ।
वानाननान्नानुवनं न नुन्ना
नवीनिवावन्नवनाववित्रः ॥११॥ द्व्यक्षरः

4056 स्फुरत्किरीटास्पद-पद्मराग-
मयूखरेखाच्छुरिता मुरारेः ।
व्यापार्यमाणासिखरक्तधारा
मार्गाङ्कितेव श्रियमासदद्द्यौः ॥१२॥

5057 स साधु संधो निधनान्धधुन्धु-
र्धनुर्धुनानो धुरि धीनिधीनाम्
रुरोध रोधै मृधमार्गरागि-
मनाः समग्रासुरसारसेनाः ॥१३॥ सप्तव्यञ्जनबन्धः

4058 *तेन न्यवारिषत भिन्नघनाघनौघ-
सौदामिनी-क्षण-परीत-कृशानु-शल्यैः ।
दैत्याधिराजपृतनाः कृतनाकिलोक-
कम्पैः शनैरशनिशाततरैः शरौघैः ॥१४॥

4059 प्रत्यग्र-पांसु-परुषाः प्रतिपन्नदिक्क-
मुद्भूत-पत्त्रपटला वियदुत्पतन्त्यः ।
भ्रेमुस्तरां भयकृतो भुवनावसान-
वात्या इव प्रतिदिशं सुरदैत्यसेनाः ॥१५॥

---

Ed. * A, B, C omit 14th, 15th and 16th श्लोक which appear in the printed text and read them separately ।

4060 प्रेङ्खद्दवानल-परीत-विटङ्ककूट-
विन्ध्याचलावयव-विभ्रममूहिवद्भिः।
पिङ्गोर्ध्वकेश-निवहैर्नवनीलभाभिः
सङ्ग्रामवर्त्म तदयायत यातुधानैः ॥१६॥

4061 कुन्ताभिघातादृणमीयवद्भि-
स्तदा चकम्पे तुरगैररीणाम्
घ्नन्तो न ते तत्र रुचिं दधाना
तदा च कम्पे तुरगैररीणाम् ॥१७॥

4062 स नीर-भाराम्बुधराभिराम-
स्तडिच्छटापिङ्गतरोत्तरीयः।
श्रियं दधानः पृथुलाङ्गलीनां
[1]वर्षावतारप्रतिमो मुरारिः ॥१८॥

4063 करैरकारोरि-किरोऽकुकाकु-
राकेकरैरेककुकारकारुः।
किरेरकारि ककरैककारा
कुरीरकारेक-[2]करारकौकाः ॥१९॥

4064 तत्खड्गधाराविनिनिकृत्तमूला-
विषाणिनां पीवरहस्तदण्डाः।
विधीयमानान्तक-राजधानी-
स्तम्भाभिरामाः पतिता विरेजुः ॥२०॥

4065 योधस्य तस्मिन् समरे तदानीम्
विनिघ्नतोऽरातिचमूः स्वधाम्ना।
भास्वानपि स्फारतरप्रतापो
न साम्यमालम्बत चारुदोष्णः ॥२१॥ मात्राच्युतकम्

१. A, B बद्धावतार for वर्षावतार। २. A करारकोऽकः for करारकौकाः।

4066 निपातितस्यारिशिरस्त्रबन्धैः
कृपाणपट्टस्य च तेन रोषात् ।
तदास्पदश्रीमणिपारिहार्य-
निनादलीलारणितेन तेने ॥२२॥

4067 रणं गजैः सिन्धुमिवामराणाम्
तदा पराजैष्टतमन्तरङ्गैः ।
विरोचनश्चानुगतोऽधिपत्य-
तदापराजैष्ट तमन्तरङ्गैः ॥२३॥ युग्मम् :

4068 [1]सुरारिनाथेन रणक्षपासु
प्रभामयस्य ध्वजिनी तदानीम् ।
युगान्तवेलेव सनीरभार-
गभीरतारस्तनयित्नुघोषा ॥२४॥

4069 [2]परापनापक्षमनानतेन
नवीनसापत्न्यपसा सुगासु ।
जिताजिमाथिप्रथिमासुगासु
शुभासु सारम्भरसा नगेन ॥२५॥ प्रातिलोम्येन सएवार्थः

4070 निपातितस्तेन दृढास्थिबन्धे[3]
तद्भङ्गतोषादिव तीक्ष्णधाराः ।
तेने दिगन्तप्रतिफालदीर्घं
कृपाणपट्टः क्वणिताट्टहासम्[4] ॥२६॥

---

१. B मुरारिनाथेन for सुरारिनाथेन ।

२. A, B परापरामर्षसनाननेन for परापनापक्षमनानतेन ।

३. A दृढास्थिबन्धनम् for दृढास्थिबन्धे ।

४. A क्वणिताट्टहासः for क्वणिताट्टहासम् ।

4071 दीनाननेन्दूनदुनोदनुन्ना-
नानन्दनोदी दनुनन्दनादीन् ।
नानन्दिनोऽनूननदीननादा[1]-
न्नन्दी ननन्दानु नदन्नदूनः ॥२७॥ द्व्यक्षरः

4072 नवोत्पलश्यामलकान्तिभास्व-
दनेकपारीहित-चारुशोभाः[2] ।
स पानभूमीरिव संयुगोर्वी-
श्चकार नानावरवीरबाह्वाः ॥२८॥

4073 व्यधायि तेन क्षपितास्त्रशस्त्र-
प्रपञ्चमायामवता सतारम् ।
तत्सैन्यमावर्जित-शत्रुरक्त-
प्रपञ्चमायामवता सतारम् ॥२९॥

4074 तस्मिन् महारौ रव-सङ्कटेऽपि
निपातिताः संयुगमूर्ध्नि वीराः ।
[3]कृतापदानाः प्रसरद्विमान-
वीथीगताः स्वर्गनिवासमापुः ॥३०॥

4075 साम्भोभरैरञ्जनभेदभाभिः
प्राप्तैः स्मरारेः समरानकत्वम् ।
संहारकालक्षुभितस्य सिन्धोः
समानशब्दैर्गगनं तदानीम् ॥३१॥
मात्रारहितो गूढक्रियाकर्तृकः

---

१. A नदीननादान्नदीननन्दानु । २. C शौण्डाः for शोभाः ।
३. B कृतापदानाम् for कृतापदानाः ।

4076 [1]सङ्ग्रामभागे सहसाभ्युपेत्य
कृताभियोगान् सुभटांस्तदानीम् ।
एका शिवा दूत्यपि चान्तरेण
संयोजयामास सहाप्सरोभिः ॥३२॥

4077 संख्ये परासुं सुरलोकनारी
प्रवीरमादाय सरागिचेताः ।
सुमेरुकुञ्जं प्रविवेश चारु-
प्रियालसालं रमणाभिलाषात् ॥३३॥ अक्षरच्युतकम्

4078 करालरेखं सृणिघातधूत-
मूर्धा समुत्क्षिप्य करं करीन्द्रः ।
अदर्शयन्नाकतलाधिरोह-
सोपानमालामिव योद्धुरग्रे ॥३४॥

4079 माराररिमाममरैरमोमा
[2]मुरार्मारिरोररिमराररीराम् ।
मारीममीरां मरुमा ममर्म
मारामि-रामारु-रमीममोर्मिम् ॥३५॥ द्व्यक्षरः

4080 दैत्याधिपास्तत्र युयुत्सवो ये
सरोषदष्टाधररौद्रनेत्राः ।
क्षताभिमानास्तरसा तयाथ
ते वीततृष्णाः समरे बभूवुः ॥३६॥

4081 संसारसेतुः सुरसंस्तुतास्त्रै-
स्तस्तार सास्तारितराः सतारा ।
सारास्तितारातिरसाः ससूताः
सासोत्सरासाः सरसास्ततस्ताः ॥३७॥ त्र्यक्षरः

---

१. A, B सङ्ग्राम भागं for सङ्ग्रामभागे ।

२. A, B, C मुरारेरीमीरिमभूम्यरीराम् ।

4082 वज्रप्रभं तत्पृतना तदानीम्
वेलेव कूलाचलमूर्मिभङ्गैः ।
विश्वाप्यविश्वासकृदाहवेषु
विव्याध संरंभ्य वराहकर्णैः[1] ॥३८॥

4083 निघ्नन् स शत्रोः पृतना रणेषु
सेभा वरासप्रसरा बभासे ।
संरम्भमम्भोधरघोरनादो
हरोरुसारस्तरसा रुरोह ॥३९॥　　प्रातिलोम्येनाभिन्नार्थपादः

4084 अभ्यापतन्ती स्थगितान्तरिक्षम्
सरोषचित्ता युधि विप्रचित्तेः ।
टाङ्कारिताशेषविमानघण्टै-
स्तदाविकीर्णै भुजगैरिवारात् ॥४०॥

4085 सेना सभामा नवतीव्रतापे
सेना सभा मानवती व्रतापे ।
साधूर्जिता सन्नवधातुरागे
सा धूर्जिता सन्नवधातुरागे ॥४१॥　　समुद्गयमकम्

4086 दानारता सङ्गतमानदासा
[2]नानाधुरा वर्मवता वरासैः ।
सैरावता [3]वर्मवरा घुनाना
सा दानमातङ्गसतारनादा ॥४२॥　　अनुलोमप्रतिलोमार्धश्लोकः

4087 निपत्य संहारविभावरीव
सुरारिसैन्येन समं युयुत्सुः ।
छायान्धकार-स्थगितार्कबिम्ब-
दिगन्तरा दानवचक्रवालम् ॥४३॥

---

१. B, C वराहकालैः for वराहकर्णैः ।　　२. B नानाधुना ।
३. B वर्मधना for वर्मवरा ।

4088 कल्लोलि कीलाल-कुलाकु- लाकु
काकोलकाकी-कुलिकालिकेकैः ।
काली कुकाकोकिलकालकैका
लोलालकालोकि कलौ किलोल्का ॥४४॥ द्व्यक्षरः तिलकम्

4089 कात्यायनी द्वादशभिस्तदानी-
मुदञ्चिताषाढतयाथ दोर्भिः ।
[1]व्यराजतायोधनमूर्ध्नि मासैः
संवत्सरश्रीरिव जृम्भमाणा ॥४५॥

4090 तन्मार्गणैर्येऽभिहताः पतद्भि-
रवापतन्वीरतयाभियोगे ।
तान्दिव्यनारीजनता धियार्घ्यै-
रवाप तन्वी रतयाभियोगे ॥४६॥

4091 चिरं निदध्यौ पुनरुक्तमूर्च्छा-
गमागमेषु प्रविलोकितानाम् ।
निमीलिताक्षः समिति प्रवीरः
सुराङ्गनानामिव रूपलक्ष्मीम् ॥४७॥

4092 समुत्खनत्कश्चिदपास्तहेति-
रजोततानेकपदं तदण्डम् ।
वैरिश्रमप्यश्वखुरक्षतोत्थं
रजोऽततानेकप-दन्तदण्डम् ॥४८॥

4093 एकस्य संख्ये परिपूर्णचारु-
शृङ्गाररागस्य बभूव तस्मिन् ।
ईहामृगाङ्कस्य सुराङ्गनाभि-
र्दृष्टस्य चेष्टारभटी [2]प्रधाना ॥४९॥

---

१. A विराजत for व्यराजत । २. B चेष्टारभरते for चेष्टारभटी ।

4094 भयङ्करैरावणदन्तदण्ड-
सङ्घट्टधूम्राविलमेरुकुञ्जा ।
अमन्दरीढोरगबाणविद्ध-
विटङ्कटङ्कासुरबाहुदण्डा ॥५०॥　　भाषासमावेशः

4095 गम्भीर धीरारवरीणभीरु-
रणादरा दारुणवारणा सा ।
अभङ्गुरा वीरविरूढहाव-
सुराङ्गनादक्षकटाक्षमोक्षैः ॥५१॥　　पादनिरवद्यः

4096 प्रभामयेनारिचमूस्तदानीम्
सलीलमास्फालितचापयष्टिः ।
विरूढसंरम्भ [1]सुरारिबाण-
संभार संरुद्धकरीरकुञ्जा ॥५२॥　　प्रागर्धनिरवद्यः

4097 आरूढरीढामरबाणविद्ध-
तुरङ्गमाला रणरागमूढा ।
नीता विहस्तत्वमिभैः सहाथ
सुवर्णसानोर्गहनान्यविक्षत्[2] ॥५३॥　　चरमार्धनिरवद्यः

4098 रुषा तमभ्यैदथ वज्रबाहु-
वरूथिनीः सङ्गररागिचेताः ।
दैत्यैरुपेता [3]क्षयकालसिन्धु-
वेलेव कल्लोलघटासहस्रैः ॥५४॥

4099 संहारधीनर्दमदा[4] समाभी
रासादरातिस्थिरतारका च ।
सातं वरासप्रकरेऽभियोज्या
नामाहिताजित्वरसादिनामा ॥५५॥　　प्रातिलोम्येनानन्तरश्लोकः

---

१. B मुरारि for सुरारि ।　　२. गहनेत्यविक्षत् ।
३. B युधिकालसिन्धु ।　　४. B नंर्समदा ।

4100 [1]मानादि-सारत्व-जिताहिमाना
ज्यायोभिरेकप्रसरावतंसा ।
चकार तारस्थितिरादसारा
भीमा सदामर्दन धीरहासम्[2] ॥५६॥

4101 दैत्यैरथाभ्येत्य कृतान्तमुख्या
रथादयुध्यन्त रणे सुरौघाः ।
तरङ्गिणीस्रोतसि सम्पतन्त-
स्तरङ्गभङ्गा इव गण्डशैलैः ॥५७॥

4102 रक्षोद-रक्षोद-विपन्नदैत्य-
मानागमानागत-भीति-योधाम् ।
पत्रातपत्राततबद्धशोभां
विश्वासविश्वासपदातिसैन्याम् ॥५८॥

4103 अभ्येत्य सङ्ग्रामभुवं विषाण-
प्रभाछलेनोदरधामपीतम्[3] ।
समुद्गिरन् गाङ्गमिव प्रवाह-
मायोधयन् नागमुखोऽभियातीन्[4] ॥५९॥

4104 भानेन नूनानि भानतुन्ना-
निभाननो भानु निभान्ननभोभित् ।
[5]नाभिन्न नाभीन निनाननौभा-
नानाभिनोभान्ननानुभूनुत्[6] ॥६० द्व्यक्षरः विशेषकम्

---

१. A, B सनादिसारत्व for मानादिसारत्व । २. A सदामर्दनधीरहासाम् ।
३. A, B, C धामपीठं for धामपीतम् । ४. A अभिपातीन् ।
५. B नाभिन्ननाभी for ननाभिन्ननाभी । ६. A, B भूणंत् for भूनुत् ।

4105 प्रकाशितायोधनसौष्ठवोऽथ[1]
मायासुरोऽन्यत्र विपक्षलोकम् ।
विरूढ एकोऽधिरणं बबाधे
प्रसह्य धात्वर्थमिवोपसर्गः ॥६१॥

4106 ददर्श सेना [2]अथ दानवाना-
मनुत्तमा साध्यवसा यमस्ताः ।
शरीरलग्नाश्च शिवा भटाना-
मनुत्तमा साध्यवसायमस्ताः ॥६२॥

4107 मूर्च्छापरीतं तरसा जगाम
जहौ समाश्वासमुपेयिवांसम् ।
[3]कदर्थितेति स्म गतागताभ्यां
भटेन नाकप्रमदाहवाग्रे ॥६३॥

4108 तेनाहतान्याहवदुर्मदेन
द्वन्द्वे तदानीं तुमुले प्रवृत्ते ।
ततः पदानीव बलानि पूर्व-
मभ्यर्हितानि द्विषतां निपेतुः ॥६४॥

4109 विशङ्कटं कण्ठविषं दधानः
कुलाद्रिनिर्भेद विशङ्कटङ्कम् ।
महानि कर्तुं समरे निरास्थ-
दरातिलोकं समहानिकर्तुम् ॥६५॥

---

१. B प्रकाशिताधनसौष्ठवेऽथ ।

२. A, B, C ददर्श सेना युधि ।

३. B कदर्थ्यते स्मेति for कदर्थितेति स्म ।

4110 भान्तिस्म [1]संवीतगुडैर्वपुर्भि-
स्तुरङ्गमाः सन्ततमापतन्तः ।
आविष्कृतानेक-सहस्रसंख्यै-
रिवेक्षितुं विक्रममिन्दुमौलेः ॥६६॥

4111 शिरो वहन् वन्धुरमाजिघृच्च
शिखण्डकान्तं शशिखण्डकान्तम् ।
रराज लग्नःसुरशास्त्रवाणा-
मनेकपाली दमने कपाली ॥६७॥

4112 च्छेत्तुं शिरः कुञ्जरपृष्ठभाजः
पर्यस्तमीशेन सधाम चक्रम् ।
ददर्श राहुर्निजकण्ठपीठ-
च्छिदां स्मरन्नुत्फलदन्तरिक्षे ॥६८॥

4113 [2]सभामयानां प्रसभामयानाम्
समिद्धरागाभि-समिद्धरागा ।
चकार सेना न च का रसेनाः
समाहितानामसमाहितानाम् ॥६९॥

4114 नभस्तलोद्यान-तमालखण्डैः
भटप्रतापानल-धूमदण्डैः ।
सङ्ग्रामदुग्धोदधिकालकूट-
लेखाविभङ्गैः स्फुरितं कृपाणैः ॥७०॥

4115 तस्मिंस्तदा भास्वति चन्द्रचारु[3]
निशातहेतौ युधि जृम्भमाणे ।
विशीर्यमाणं ददृशे सुरारेः[4]
सैन्यान्धकारं त्रिदशाधिनाथैः ॥७१॥ बिन्दुच्युतकम्

---

१. A संवीतगुरैर्वपुर्भिः । B संवीतगुडैर्वपुर्भिः । २. C सभाशयानास् ।
३. A चन्द्रचारुणा । ४. B ददृशेऽमरारेः for ददृशे सुरारेः ।

4116 सारा मतापि क्षपितामरा सा
१मारा भिया चक्रचयाभिरामा[२] ।
नवेभरासप्रसरा भवेन
सेना तु हेतिक्षतिहेतुनासे ॥७२॥ प्रातिलोम्येन सएवार्थः

4117 उत्तिष्ठमाना समरे सदर्पं
संहारवेलेव जगत्त्रयस्य ।
निस्त्रिंशकल्लोल-करालिताभ्र-
सिन्धुर्नदन्तीघनघोरघोषम् ॥७३॥

4118 [३]तेनाच्युताचारमृधाभिरामा
[४]मानानता गौरवधामरागात् ।
[५]सेनार्दिता साररुधा सुराणां
नानाहिता वारयुधा परासीत् ॥७४॥
प्रतिपादं गोमूत्रिकामुरजबन्धः

4119 रोमाञ्चमुच्चैर्बिभराञ्चकार
तत्खड्गघातैः सुभटस्य संख्ये ।
सुराङ्गनादर्शन-जृम्भमाण-
मनोभवस्येव शरीरयष्टिः ॥७५॥

4120 वज्रप्रभस्याथ युयुत्सु सैन्यं
तदाशु शूरेण तदा शुशूरे ।
शक्ता बभूवुः समरे विजेतुं
महानटं केऽत्र महानटङ्के ॥७६॥

---

१. A, B साराभिया for माराभिया । २. A अभिरासा for अभिरामा ।
३. B तेनाच्युतासारमृता for तेनाच्युताचारमृधा ।
४. B सनारता for मानानता । ५. तेनार्दिता for सेनार्दिता ।

4121 [1]विचूर्ण्यमानद्विपकर्णशङ्ख-
परागपाण्डूकृतमुद्धतस्य ।
सचन्दनालेपमिवामरस्त्री-
समागमोत्कस्य वपुर्विरेजे ॥७७॥

4122 समानितायुक् प्रसृता वरासि
सिरावतासृक् प्रयुतानिभासा ।
रावीभरासप्रतिघापरोप-
परोपघातिप्रसराभवीरा ॥७८॥ अनुलोमप्रतिलोमपादः

4123 निशाननेनाहितहारिशोभम्
शैत्यस्य धामामलमुष्णरश्मेः ।
दधत्तदानीं युधि मण्डलाग्रं-
तुषारधामा च जघान दैत्यान् ॥७९॥

4124 विमत्सरः पत्त्रिगणेन साकं
सव्यापसव्यापदि दैत्यचक्रे ।
व्यापार आसीच्च शरैर्भटानां
सन्देहसन्देहपरायणानाम् ॥८०॥

4125 स्मेराननाभ्यां समरे समेत्य
सोल्लास-नानासिलता-ललामाः ।
ताभ्यां ससंरम्भमराति-सेना
निरासिरे सारतराभिरामाः ॥८१॥

4126 तथा दधानोऽतनुतां निधीनाम्
धृताननोऽनून धुनीननादः ।
तेनैधितानां निधनं तदानीम्
नूनं न तेने न धनाधिनाथः ॥८२॥ तवर्गबन्धः

---

१. A, B वदीर्यमाण for विचूर्यमाण ।

4127 [1]चूर्णौ दधौ तद्दृढवज्रमुष्टि
निष्पिष्टसौवर्ण-तनुत्रजन्मा ।
मुक्तानिधानेषु करीन्द्रकुम्भ-
[2]स्थलेषु सिद्धार्थक-राशिलीलाम् ॥८३॥

4128 कङ्कालकार्यार्थि शिवासिलूनकम्
काला-करारातिगणा रणोर्व्याम् ।
कङ्कालका भासुरदेहलग्न-
कङ्कालकाधीशचमूर्न चक्रे ॥८४॥

4129 योधाः कलापैः कृतचारुशोभा
विमुक्तसिंहध्वनितारकेकाः ।
कोषोदरेभ्यश्चकृषुः कृपाणा-
नहीन्मयूरा इव कोटरेभ्यः ॥८५॥

4130 प्रेङ्खन्नखांशूत्करमञ्जरीका
कर्णान्तकृष्टोन्नत-चापयष्टिः ।
संख्यावतोऽपि द्विषतो रणेषु
जघान काली गणनाव्यतीतान् ॥८६॥

4131 जगत्त्रयेऽपि स्पृहणीयरूपा[3]
विलक्षणं [4]रूपमुपार्जिहीर्षुः ।
लावण्य-सौभाग्य-गुणैरनिन्द्यैः
पुरन्ध्रि-चूडामणितामुपेत्य ॥८७॥

4132 रोधोधरा रोध्रधरैरिराभ्रै-
ररोधुरा धूर्धरधूरुरूराः ।
रुरोध रैधाधिरुधो रधाधि-
राधारधीरा रुधिरा धरार्धम् ॥८८॥ द्व्यक्षरः युग्मम्

---

१. C पूर्णे । २. A कूटेषु for स्थलेषु ।
३. B स्पृहणीयरूपं for स्पृहणीयरूपा । ४. A, B वेष for रूपः ।

4133 क्षिप्तं करेणाथ तथा विदूर-
मर्धार्धमग्नं विनिपत्य तिर्यक् ।
बभार चक्रं करिकुम्भभास्व-
दट्टालसालक्रमशीर्षकत्वम् ॥८६॥

4134 तस्यां रणारण्यभुवि प्रकृष्ट-
कृपाणकृत्तारिभटा तदानीम् ।
मारीचमायाकृततीव्रमोहा
रघूद्वस्येव चचार वृत्तिः ॥६०॥

4135 [1]साम्भोभरै रञ्जनभेदभाभिः
प्राप्तैः स्मरारेः [2]समरानकत्वम् ।
संहारकालक्षुभितस्य सिन्धोः
समानशब्दैर्गगनं तदानीम् ॥६१॥

मात्रारहितो गूढक्रियाकर्तृकः

4136 स्तनत्युपेतां पृतनां [3]स्मरारे-
स्तदा न केयूर चितांसभाभिः ।
सुरद्विषः संवलितार्कपादा-
स्तदानकेऽयू रचितां सभाभिः ॥६२॥

4137 ततोऽत्यतीयाय तया युताति-
ताय्यत्ययायायतितोतियत्तम् ।
तुत्या ययौ तं [4]यतियेयतायी
तायीतयातो ययुयायितत्या ॥६३॥

---

१. B साम्भोधरै for साम्भोभरैः । २. C सपरानकत्वस् ।
३. B मुरारेः for स्मरारेः । ४. B तुल्या ययौ नेयति for तुल्या ययौ तं ।

4138 कर्षन्धनुः संहतदीप्रवाणं[1]
सप्तज्जरासन्धवधो रणेन ।
आवर्जितो भीम इवावभासे
सलज्जरासन्धवधो रणेन ॥९४॥

4139 संख्ये [2]वृषाङ्कः प्रसृतो न तेज-
स्तदास हन्तव्यवधायकस्य ।
सङ्ग्रामरागप्रसरेण दूरं
तदास हन्तव्यवधायकस्य ॥९५॥

4140 सत्त्वप्रकाशप्रसरेण दूरं
निर्मुच्यमानेष्वथ नाकसत्सु ।
कोदण्डवल्लीस्तरसा धुनाना
वरूथिनी शीतमरीचिमौलेः ॥९६॥

4141 सज्जा निनादानवतापितेषु
साकं पताकाशत-लाञ्छितेषु ।
सज्जानिना दानवतापितेषु
साकम्पताकाशतलाञ्छितेषु ॥९७॥ समुद्गयमकम्

4142 शिलीमुखौघैः क्षययसप्तसप्ति-
मरीचिदीप्रैस्त्रिदशारिलोकः ।
प्रसर्पतारात्सकलासु दिक्षु
रजोन्धकारेण विजृम्भितासु[3] ॥९८॥

4143 व्यापादयन्तं निशितैः स संख्ये[4]
[5]समानचक्रव्यवहारतापे ।
[6]मेदोर्जितानेकपदारिपाति
समिद्धरागश्चतुरंसकूटम् ॥९९॥

---

१. A दीप्रघाण for दीप्रवाण ।	२. B वृषाङ्कात् for वृषाङ्कः ।
३. B, C विजृम्भितायां for विजृम्भितासु ।	४. A, B समक्षे for ससंख्ये ।
५. C समानवक्र ।	६. C सदोर्जित for मदोर्जित ।

4144 रणाङ्गने कैशिकमार्गचारा
[1]शिक्षारसाविष्कृत-सौष्ठवानाम् ।
तत्सैनिकानां धुतचर्मखण्डा
व्यजृम्भत स्थानविशेषलक्ष्मीः ॥१००॥

4145 हीनोहिनीनां नहनेन नैनां
नीहोहनानोनहनाननेहा ।
ही नुन्नहाना [2]हनने हनेना
नहानि नानाहननाननंहः ॥१०१॥ द्व्यक्षरः

4146 तद्बाणनिर्भिन्नकपोलमुक्त-
रक्तच्छटापाटलकर्णशङ्खः ।
गृहोपकण्ठास्पदनूतनेन्दु-
बिम्बोदयाद्रिश्रियमाप नागः ॥१०२॥

4147 धीनां निधानं निधनान्धधुन्धू-
नधूननोऽनून धुनीन-धूनिः ।
[3]नुन्नाधि-धेनून-धुनोन्न-नैना-
ननिन्धनानाधि धनैधनोऽन्धान् ॥१०३॥ द्व्यक्षरः

4148 मूर्च्छापरीतं रभसाज्जिघृक्षुः
सुराङ्गना सङ्गरमूर्ध्नि धीरम् ।
उज्जीवयन्तं करशीकरौघै-
रमर्षजिह्मं गजमालुलोके ॥१०४॥

---

१. C शिखरवानिप्कृत, B शिक्षारसाविष्कृत ।

२. A omits…हन reads ही नुन्नहाना…ने हनेना ।

३. A नुन्नाधिधेनूनधुनोन्ननं: for नुन्नाधिधमून धुनोन्न ।
B नन्नाधिधन्या…for नुन्नाधिधनून ।

4149 [1]रेपे पुरुप्रीरपरोऽपि पाप-
रिप्रोरुरूपारिपपीरपारम् ।
पुरारि रापापरपिप्परार्पि-
रेपो[2] रिपूरोररपूरिरोपः ॥१०५॥

4150 मुक्तानिधेः[3] कुञ्जरराजकुम्भ-
कूटस्य पर्यङ्कतलेष्वशङ्काम् ।
हुङ्कारमात्रैरभिजप्य योधः
संसिद्धिकामो निचखान शङ्कून् ॥१०६॥

4151 तेजोततजो जजतोऽतिजेता
ततो जितोजोतितजातिजातम् ।
जातीति तोत्ते जितजित्तताजि
जजी जितान्तीतजितीतितत्तत् ॥१०७॥ द्व्यक्षरः

4152 रोचिष्णुतच्चापविमुक्तचण्ड[4]
नाराचचक्रास्त-विरोचनार्चिः ।
जज्ञे जगत्तत्क्षणमन्धकार-
संधाननिर्धूतदिगन्तराणि[5] ॥१०८॥

4153 [6]रोचेऽरिरोरो रुरुचे ररोच्चि-
च्चराचरार्चारुचिरोरुचर्चः ।
चारीचरो रारिरुची रुचोच्चै-
रचूचुरच्चार्चिररेर-चौरम्[7] ॥१०९॥

---

१. A रिपो for रेपो । २. B रिपूरोररिपूरिरोपः ।

३. A, B मुक्तानिधीः for मुक्तानिधः ।

४. A परिकचण्ड for विमुक्तचण्ड । B चरिष्णुचण्ड ।

५. A दिगन्तकान्तिः for दिगन्तराणि ।

६. A राचीरिरंशेरुरुचे । B रावीरिरंशेरुरुचे । C रोचेररोरोरुरुचे ।

७. C चोपम् for चौरम् ।

4154 गीर्वाणभङ्गोद्धुरकन्धरत्व-
मायोधनाग्रे दधतोऽप्रलीना ।
सरत्नचापाञ्जलदानिवारा-
त्तडिद्गुणेनाशु विधूय दैत्यान् ॥११०॥

4155 लोलालि-मालोल्लल-मौलिमूल-
[1]मीलल्ललामामल-मामलेली[2] ।
मौलीममालालमिलां ललाम-
[3]लामाम-मोल्लोल-ममालिमीमः ॥१११॥ द्व्यक्षरः

4156 सकामुकज्यारव-तारकेका
निनादिसम्पूरितदिग्विभागान् ।
सुरद्विषो बद्धरुषः कराल-
[4]कपालशोभामभितो जिघांसुः ॥११२॥

4157 नुन्नैकनाना-नकनाकिनीका-
ननीकिनीकान-नकेकिनोऽकान् ।
कोनाकनन्नाककनकानकाना
नकोऽककिङ्काननकूकाकुः ॥११३॥ युग्मम् द्व्यक्षरः

4158 सैन्यं तदानीमशनिप्रभेण
सुरद्विषः [5]संयति रक्ष्यमाणम् ।
युयुत्सु दूरादुपयत्य-योधे
र्विमुक्तसीमेव विलोलमम्भः ॥११४॥

---

१. C पीलल्ललामामल ।	२. ....मामलमामलैली ।

३. B मामोलमल्लोल ममालिमीमः for लमाममोल्लोलममालिमीमः ।

४. B कलापशोभा for कपालशोभा ।	५. A, B संप्रति for संयति ।

4159 तदा तु दातैत ददातु तुत्तो
　　तदीतितो तादितदुद्दतोदी ।
[1]तुतोद दातातितताददित्त-
　　दूतीति तातो दददेततुत्तीः[2] ॥११५॥　　द्व्यक्षरः

4160 सङ्ग्राममूर्ध्नि त्रिदशारिचक्र-
　　मुद्गीर्णहेतिस्थगितान्तरिक्षम् ।
जिघांसु यद्यद्वृषराजकेतु-
　　मभ्यागमन्मन्दरदुर्निरीक्ष्यम् ॥११६॥

4161 तत्तचतोतीतपतत्पतीति
　　पितोत्ततापापि तुपूतपापः ।
पीतातपोपापतितोपतापि
　　पातोत्ततोत्तापितपत्तिपूतः ॥११७॥　　युग्मम् द्व्यक्षरः

4162 विपाण्डुभिः केतुशिखांशुकौघै-
　　रनेकगङ्गामिव कुर्वती द्याम् ।
निर्ह्रादघोरानघचक्रनेमि-
　　रथाङ्गकेतोः शशिमौलिनारात् ॥११८॥

4163 [3]सेनासुसूनासुनसाननेन
　　ससूनुनानेन ननून्निनंशुः ।
सा नूननानासनिनैनसंस-
　　न्नुन्नैनसा सानुनि सासिनासे ॥११९॥　　द्व्यक्षरः

4164 चिच्छेदनो केवलमाहवेषु[4]
　　वल्गाक्षयाशामपि योद्धुरग्रे ।
विहस्ततामेव न कुञ्जरस्य
　　तत्स्वामिनोऽपि व्यधितेन्दुमौलिः ॥१२०॥

---

१. B ततोददातातित ।　　२. B दुददेततुत्तीः ।　　३. B सेनासुसेगा ।

४. B केवलमाहवे ज्याम् ।

4165 नुन्नारिरैनोननरूनंरान्न-
नानाररीरूरनूनौररीरान् ।
[1]रोनाननान्नोरुरनूननारी
नीरारिरैनाननुनैरिरन्न ॥१२१॥

4166 तत्खड्गधाराविनिपातकृत्तै-
रायोधनोर्वीसरसी पतद्भिः ।
शिलीमुखानां विरराज शल्यै-
र्नीलोत्पलानामिव पत्रजालैः ॥१२२॥

4167 सूदाससासादिसदंसदोःस-
ददोसदः सूदिसदः सदासम् ।
स सादिसादं दददाससाद
सदासुसूः सीददसौ सदंसम् ॥१२३॥ युग्मम् द्व्यक्षरः

4168 ससत्त्वशाली समदत्त्वमाप्तो
निबद्धमूलः स्थिरभूतिचर्चः[2] ।
[3]उत्सेधिवानस्खलितः शुचित्वात्
सन्नागराजश्रियमाप गुर्वीम् ॥१२४॥ अर्थचतुष्टयवाची

4169 शस्त्रांशुभिर्भानुकराभिमर्षा-[4]
त्संमूर्च्छितैः सक्षितिशैलसानुम् ।
उल्काकलापाकलितामिव द्यां
सुकेतुसैन्यं विदधत्तमभ्यैत् ॥१२५॥

---

१. B रीरान्ननानारुरनूरनारी ।

२. B, C स्थिरभूतिबन्धः ।

३. C omits उ ।

४. B करात्रमर्षा for कराभिमर्षा ।

4170　तत्तातितातोतितत्तुत्तितौति-
　　तोत्तैतितातीतितत्तोत्तितुत्तिः[1] ।
तातोऽतितोऽतुत्त तु तत्ततोऽत्ता
　　तुत्तोत्ततातातितति तु[2] तोत्तुम् ॥१२६॥　　एकाक्षरः

4171　समूलचक्रांकुशशक्तिबाण-
　　चक्रावचूलाभिरथाहवोर्व्याम् ।
स्थितो जरत्कुञ्जरदन्तराजि
　　[3]विडम्बिनीभिर्नवरूथिनीभिः ॥१२७॥

4172　सदानवानामवधीरितानाम्
　　सदानवानामवधीरितानाम् ।
सदानवानामवधीरितानां
　　सदानवानामवधीरितानाम् ॥१२८॥
पादाभ्यासः संपुटयमकं च

4173　धूलीवितानमभितः स्थगितान्तरिक्ष-
　　[4]मायोधने सपदि पाकविपाकसंज्ञौ ।
दैत्याधिपावधि युयुत्सुतया समेत्य
　　सम्यक्समीकमसमांसधरौ व्यधाताम् ॥१२९॥

4174　वेत्ता ततो विततवीतिततावतीत-
　　वातो ववाविति तु वित्तवता वितोत्ता ।
वीतेति तुत्ति वततावति तावबेत-
　　तत्त्वोतिवित्ततवति त्विति वीतितोत्ता ॥१३०॥　　द्व्यक्षरः

---

१. A, B तोत्तैतितातीतितततातुत्तिः ।

२. A, B reads the fourth line as तुत्तत्ततोतानुत्तैत्ततोता ।

३. A, B त्रिडम्बिनीभिन्नवरूथिनीभिः ।

४. B, C मायोधनामपनिपाक विपाकसंज्ञौ ।

4175 सैन्यानि यानि रणमूर्ध्नि कृपाणमेघ-
धारानिपातशमितोष्मलघूनि शत्रोः ।
आयान्ति चक्रुरभितो गगनं विकीर्णैः[1]
शस्त्रांशुनिह्नुतदिवाकरधाम बाणैः ॥१३१॥

4176 तानीतानि ननून्नतानि तनितुं तुत्ति नतोतीनि नो
तातेनातिततानने नततातीतेन नुन्नेतिना[2] ।
तेनोत्तानितनूतनातिनुतिनानन्तेन नूनं ततो
नानानुत्ति नितान्ततान्ततनुना नीतानि तन्तूनताम् ॥१३२॥

द्व्यक्षरः

4177 विस्त्रस्तकेसर-करालसटाकलाप-
संछादितांसशिखरो युधि पञ्चवक्त्रः ।
तीक्ष्णाग्रमार्गणनखप्रकरावरुग्ण-
गन्धेभकुम्भकटकः सुरसिंह एकः ॥१३३॥

4178 वव्रे विरावविवराविररौरवौर्व-
रेवा विवारवरवारिरवेररूराः[3] ।
वीरारुराविररुर्वरवैरिवीरै-
र्वैरी रुरोरिव विवी रविवार्वरौर्वः[4] ॥१३४॥ द्व्यक्षरः

4179 [5]सेना संख्ये वज्रमुष्टेस्तदानीं
घोरा दिक्संधीन्दारयन्तीव नादैः ।
प्राप्ता निश्च्योतद्दन्तिदानप्रवाह-
व्यासङ्गेनोच्चैर्धौतसूर्यातपश्रीः ॥१३५॥

---

१. A, B विपर्णैः for विकीर्णैः । २. C नुन्नताम् ।
३. B, C रवाररवोरवारः । ४. A रविवार्वरोर्वः ।
५. B सा सेना संख्ये वज्रमुष्टेः ।

4180 तोत्ता तां मतिमत्तमो ममततातीतामतामुत्तमा
[1]मात्तो मूममितामतामतितमां मीमातितोऽतुत्तिमान् ।
मत्तामूर्तिमतीममातिममितामातीतिमत्तातता
मेतोऽत्तातितुमीतिमत्ततिमतां मातामिमीतातताम् ॥१३६॥

द्व्यक्षरः

4181 इत्थं समीक-शिरसि स्मरगाढराग-
नाकाङ्गनाङ्गनिहितामरदैत्ययोधैः ।
विभ्रत्परिस्फुरित-निर्मलचन्द्रहास-
मुच्चैः शिरः [2]करतलं च पिनाकपाणिः ॥१३७॥

4182 [3]न्यूनानां नानुयायी ननु नयनयनानुन्नयन्नायिनो नु
न्न्यायेनानायि नानायनययुनि नियानुन्नयानेन नूनं ।
यूनानूनाननेया ननयियिनि ययानेयया यायिनोऽन्या-
नानाय्योऽयायिनेयाननुनयिनि नोन्नायिनोऽनन्ययुन्नैः ॥१३८॥

4183 आयोधने दितिसुतक्षयजृम्भमाण-
भीमैकरुद्रगहनेऽप्यपसंख्यरुद्रे ।
गीर्वाणसैनिकजनैः सकलाभिभावि[4]
दोर्दण्डदृप्तमनसस्त्रिपुरेन्धनाग्नौ ॥१३९॥

4184 तोत्रारित्रैरतीतातुररति तरति त्रातरीरां ततोऽत्ती-
रातीरे तोत्तरी [5]तैरतरतरतरोरीरितैरुत्तरीतीः ।
तत्रारात्तूर्तितोऽरं तततततिरितैरूरितारेररातै-
रुत्तेरे तारतूरैरिति तरितरि तैरुत्तरीतुं तरित्रैः[6] ॥१४०॥

द्व्यक्षरः

---

१. B मातामूममिता ।  २. B, C करतलाञ्छ पिनाकपाणि ।
३. C न्यन्नानान्नानुयायी ।  ४. A सकलाभिधावि ।
५. B⋯रीनितैरुत्तरीती ।  ६. C तरित्रे ।

4185 सङ्ग्राममेघसमयेऽर्ककरावमृष्ट-
विद्युल्लतानिकर-भासुरखड्गलेखे[1]।
अभ्यापतन्स सरिदोघ इव क्षणेन
चक्रे विपक्षजनताकुलकूलपातम् ॥१४१॥

4186 व्रातीभक्षोदपक्षे [2]सुरतिहतिरसुक्षेपदक्षोभतीव्रा
स्थामासक्कारिचर्या विरतिरतिरविर्या च रिक्तासमास्था।
[3]नामायस्तातिहव्यानलक शकलनव्याहतिस्तायमाना
कानाप्तव्या समस्तातिगसरसगतिस्तामसव्याप्तनाका ॥१४२॥
प्रातिलोम्येन स एवार्थः

4187 सङ्ग्राममूर्ध्नि करवालविलूनपीन-
[4]सेनामतङ्गजकरालकरार्गलाङ्के[5]।
तार्क्ष्यीयतुण्ड-परिखण्डित-भोगिभोग-
पातालतालुसदृशश्रियि तेन शत्रोः ॥१४३॥

4188 सेनासर्वासनस्थानतसुरपतिनुत्सादिभिन्ना सशंसा
यापाकृत्या कृतज्ञाधियुतमदसरस्थानजन्येन माया।
शातासिर्वेगमत्या रवणगरभसत्रासचर्या धुनाना
सारानन्तासमग्रा जगति रसनुतस्थाममचानुनादा ॥१४४॥

प्रातिलोम्येनानन्तरश्लोकः—

4189 दानानुत्ता ममस्था तनुसरतिगजग्रामसंतानरासा
नानाधुर्या च सत्रा सभरगणवरत्यागगर्वे सिताशा।
यामानन्ये जनस्था रसदमतयुधि ज्ञातकृत्या कृपा या
साशंसन्नाभिधिरत्सा नुति परसुतनस्थानसर्वासनासे ॥१४५॥

---

१. B भासुरखड्गलेशे।
२. B, C सुरतिशति।
३. A, B शमायस्तातिहक्या।
४. C मीनामतङ्गव।
५. C करालकरार्गलाङ्कम्।

4190 इति शशधरलेखाशेखरः संप्रहारं[1]
प्रहरणपरिसर्पद्वीरवारीद्धधामा ।
असुर-भटमथीनां कालवह्निः प्रजाना[1]
मिव कवलनलीलाजृम्भितोद्दामहेतिः ॥१४६॥

4191 [2]सत्सूतोऽस्तातितासासित सस्तुतसतीसूतिसासत्तिसीतः
संतासी सूत्तिसंसत्स्तुतसतिससितोतासतोत्ततिसासूः ।
सेतुस्तुत्तीस्तितांसुस्ततसुततितुत्सासितोत्तंसितांस[3]
स्तातोऽसातंससोत्सोऽतत सततसितः सत्सिसासुस्तुतासम्[4]
॥१४७॥

4192 इत्थं दानान्धगन्धद्विरद-रद शिखाभिन्नमूर्च्छत्प्रवीर-
प्रेमाकृष्टाभिधावन्मुदितसुरवधूसार्थ[5]रुद्धाम्बरश्रीः ।
योधानां [6]रत्नसानौ सममसुरभटै रम्यसङ्ग्रामलीला
पर्यायोपात्त हेलाजयमुदितभटीचक्रवाला जजृम्भे ॥१४८॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये चित्रयुद्धवर्णनम् नामाष्टचत्वारिंशः सर्गः ।

---

१. B ,C सम्प्रहारैः　　२. C मत्सूतो ।
३. C सोत्तंसितासु ।　　४. C omits the last four letters ।
५. C मार्ग for सार्थं ।　　६. C रत्नमानौ for रत्नसानौ ।

## एकोनपञ्चाशः सर्गः

4193 तीक्ष्णैः शिलीमुखनखैरथ संप्रहार-
कण्डूविनोदनमरातिजनस्य तूर्णम् ।
कुर्वन्तमन्तकपुरीपृथु[1]सालचाप-
चक्रोऽभ्ययुङ्क्त मयमाहवमूर्ध्नि शौरिः ॥१॥

4194 वक्त्रारविन्दनिमितं करगाढरुद्ध-
पार्श्वद्वयं युधि बभार स पाञ्चजन्यम् ।
वैरिश्रीमण्डलमिव निःश्वसितानलोर्ध्व-
पर्यस्यमानमुदरान्तरतो विनिर्यत् ॥२॥

4195 आबद्धकङ्कट[3]कपाणिनिरुद्धपार्श्व-
भागः सुगन्धिवदनानिलपूर्णरन्ध्रः ।
तेनानिमीलितविलोचनपक्ष्मबन्ध-
माध्मायि संयुगरसादथ पांचजन्यः ॥३॥

4196 सेनाभिरस्य विजितस्तनयित्नुघोष-
मस्ताततायि युधितस्तनुषीभिरुच्चैः ।
[4]ग्रस्तांशुमण्डलविहस्तगभस्तिमालि-
विस्तारिणीभिरवतस्तरिरे दशाशाः ॥४॥

4197 अक्ष्मायि तस्य शिथिलीकृतनागनाथ-
विस्तारिभोगनिबिडं[5] [6]भरखर्वितं सत् ।
क्ष्मामण्डलं जलधिलङ्घिततीरलेखा-
माजह्नुषीभिरभितः ककुभश्चमूभिः ॥५॥

---

१. A पृथुमालचाप । २. A करगाढबद्ध । ३. आबद्धकर्कट ।
४. C ग्रस्तांशुमण्डल । ५. C निगडं । ६. A, C omit भर ।

4198　ताक्ष्योऽथ चञ्चुपुटदष्टभुजङ्गमूर्ति-
राकाशमुड्डिडयिषुस्तरसा धरित्र्याः ।
पृष्ठेन विग्रहभरं मधुसूदनस्य
जग्राह दानवचमूसरिदुष्णरश्मेः ॥६॥

4199　[1]उद्गच्छता गगनवर्त्म जवेन तेन
दूरावगाढदृढभिन्नरसातलाग्राः ।
आकृष्टिमुक्तवसुधाः क्षणविघ्नखेद-
मुद्वभ्रिरे नखरसंहतयः कथञ्चित् ॥७॥

4200　तत्पक्षभागरचितास्पदनागनाथ-
भास्वत्फणामणिवितानपरीयमाणम् ।
संध्यातपारुणित-तारकचक्रवाल
कल्माषतामिव जगाम तदान्तरिक्षम् ॥८॥

4201　ज्याकृ[2]ष्टिमण्डलित-कर्कशदण्डचण्ड-
कोदण्डमण्डलतया रणकाननोर्व्याम् ।
शौरेर्जितोर्जितरिपुस्त्रिदशैर्व्यलोकि
बद्धालवाल इव कोमलकीर्तिवल्लयाः ॥९॥

4202　सेना दुधूनयिषतो द्विषताममुष्य
दोर्दण्डमण्डिलितका[3]र्मुकमध्यमुक्तैः ।
काण्डैरकाण्ड-निविडोड्डमर-प्रचण्ड
नैशान्धकारविधुरा विदधे धरित्री ॥१०॥

---

१. C तद्वच्छता ।

२. ज्याकृष्टमण्डलिता ।

३. मंडतित । A reads कर्मुक ।

4203　तच्चापनिर्धुतविरुग्णशिरस्त्रबन्ध-
पुङ्खावशेषविनिमग्नशरैः शिरोभिः ।
[1]नाकद्रुहां द्रुतमभाजि रणाजिरोर्व्या
लीलावनद्धनवपत्त्रपिशाचिकाश्रीः[2] ॥११॥

4204　पक्षानिलावधुत-नाकसरित्तरङ्ग-
[3]भंगच्छटामलितनामनिविष्टकर्णैः ।
तेनाशु जिह्मगतिभैरपजुह्नुवेऽर्क-
तेजो विकास्यथ दशस्वपि दिक्षु बाणैः ॥१२॥

4205　अन्योन्यपृष्टपरिरक्षितचापचक्र-
निर्मुक्तशाततरशल्यशराभिघातैः ।
सैन्यैरजिग्रहदसावसुराधिपस्य
दिक्चक्रवालमसकृत्प्रलयप्रचण्डैः ॥१३॥

4206　क्रीडत्कृतान्त-भटमुष्टिदुरोदरैक-
लीलावराटकगणैः समराङ्गणोर्व्याम् ।
शुभ्रैरशीशरदसौ शरदार्यमाण-
सेनामतङ्गज-शिरश्च्युतमौक्तिकौघैः ॥१४॥

4207　अभ्यर्णमृत्युकृत-सन्निधिपाशपाणि-
[4]निःशङ्कहुङ्कृतिभयङ्करकिङ्कराङ्कम् ।
[5]आयोधनं सुररिपोः प्रसरत्पतत्र-
मास्थानमण्डपमिवाभवदन्तकस्य ॥१५॥

4208　तस्योत्पतत्त्रमरुतः क्षणमम्बराग्र-
सञ्चारिणो मुखरतां दधतः पृषत्काः ।
दैत्याधिपक्षतजशोणमुखा बभूवु-
र्मन्दाकिनीतट-निकेतनराजहंसाः ॥१६॥

---

१. C नाकिद्रुहाम् ।　२. A पिशाचिकासौ । C omits श्रीः ।
३. C भर्ग for भंग ।　४. C निःशेषहुङ्कृति ।
५. A, C आयोधने for आयोधनम् ।

4209 शौरेर्निशाततर-शल्यशतैरराति-
सेनाशिरांसि युधि चिच्छिदिवद्भिराराात्।
[1]दिक्चक्रमौयततरां तरसा वहद्भि-
रन्योन्यमाहवमुखेषु शिलीमुखौघैः ॥१७॥

4210 [2]सङ्कुणितेक्षणमुखैः प्रविभागदृश्य-
नाडीनिरोकगलितक्षतजाक्तकण्ठैः[3]।
आश्यामिकाग्रदशनैस्तदपास्तबाण-
कृत्तैरलोठि युधि [4]दैत्यचमूतुरङ्गैः ॥१८॥

4211 उत्क्षिप्तमूलकुटिलभ्रु विजृम्भमाण-
रोषारुणं यदभवत्सुभटस्य वक्त्रम्।
वैलक्ष्यतो नु परिपाण्डुरतामवाप
तत्कृत्तकण्ठगलितक्षतजप्रवाहम् ॥१९॥

4212 त्रैलोक्यमर्चिचयिषो धवलैर्यशोभि-
रानञ्जुषः समरचञ्चुरतां मुरारेः।
बाणाः प्रसह्य रभितः कमलासनाण्ड-
वल्मीककूटविकटोदरदन्दशूकाः ॥२०॥

4213 तच्चापचक्रनिपतन्निशितार्धचन्द्र-
निर्लूनितेन्दुकर-गौरलसत्पताकाः।
विच्छिन्नकीर्तय [5]इवावनता न रेजु-
रायोधनेषु भटकूवरिकेतुदण्डाः ॥२१॥

---

१. A, C दिक्चक्रमोपततराम्।　　२. C संकूजितेक्षणमुखैः।
३. C क्षतटाक्त for क्षतजाक्त।
४. A, C दैत्यचमूत्तमांगैः for दैत्यचमूतुरंगैः।
५. C इवाञ्जनता।

4214 देदीप्यमानवपुषा दलितान्धकार-
कूटा निवृत्तपुनरागतयो विशुद्धाः ।
तेनाभवन्वलयिनोन्नतकार्मुकेण
मुक्ताः शरास्तरणिमण्डलभेददक्षाः ॥२२॥

4215 तस्तम्भिरे प्रतिदिशं तरसा विमान-
वीथ्योऽभ्युपेत्य रणवर्त्मदिदृक्षमाणाः ।
तन्मार्गणैः सभयकौतुकनाकि-भीरु-
मुक्ताहितास्पद-निशान्तगवाक्षमार्गाः[1] ॥२३॥

4216 आदध्मिरे प्रतिरवप्रतिपन्नदैर्घ्यैः
शैलाधिराजकुहराण्यभितस्तदा[2]नीम् ।
तच्चापचक्रविवरानघघातपात-
निर्यातशातशरसंभृततारनादैः ॥२४॥

4217 माणिक्यरश्मिशकलोज्झिनाकशक्र[3]
चापाकृतीष्वसनमुक्तशरौघभिन्नाः ।
शार्ङ्गायुधः सपदि नानुबबन्ध दैत्य-
सेना[4] दिशः समिति शिश्रियुषीर्भयार्ताः ॥२५॥

4218 तस्याशु विव्रणयिषो द्विषतां वपूंषि
कर्णान्तकृष्टवलयीकृतचापमुक्ताः ।
साराव मेत्य तरसा तनुपुङ्खपक्ष-
पातावधूतजलदा विशिखा निपेतुः ॥२६॥

4219 तस्याहवातिरभसादधिशिश्रिवांसि
सैन्यानि निर्जयदशाविधुरत्वमारात् ।
नाभ्यूहिरे निशितशल्य-शिलीमुखौघ-
घोरान्धकारविधुरानथ दिग्विभागान् ॥२७॥

१. C गवाक्षमर्चाः । २. C तटीम् for तदानीम् ।
३. C नाकचक्र । ४. C मेना for सेना ।

4220 उत्खातनन्दकविकृत्तविपक्षकण्ठ-
नाडीनिरोकगलितेन निराकुलात्मा ।
विष्वक्ससंभ्रमपरिप्लवमानसैन्य-
मापिप्लवत्क्षितितलं क्षतिजेन शौरिः ॥२८॥

4221 शौरेरमन्दमुदडीयत पक्षपात-
वाताभिघातविधुताभ्रपलाशखण्डम् ।
संख्ये शिलीमुखगणेन विमुक्तसंख्य-
मानिन्युषा तु गगनोत्पलमाकुलत्वम् ॥२९॥

4222 तेन न्यवारिषत भिन्नघनाघनौघ
सौदामिनी-क्षणपरीतकृशानुशल्यैः ।
दैत्याधिराजपृतनाः कृतनाकिलोक-
कम्पैः शनैरशनिशाततरैः [1]शरौघैः ॥३०॥

4223 प्रत्यग्रपांसुपरुषाः प्रतिपन्नदिक्क-
मुद्धूतपत्त्रपटला वियदुत्पतन्त्यः ।
भ्रेमुस्तरां भयकृतो भुवनावसान-
वात्या इव प्रतिदिशं सुरदैत्यसेनाः ॥३१॥

4224 प्रेङ्खद्दवानल-परीत-विटङ्ककूट-
विन्ध्याचलावयव-विभ्रममूहिवद्भिः ।
पिङ्गोर्ध्वकेशनिवहैर्नवनीलभाभिः
सङ्ग्रामवर्त्म तदयायत यातुधानैः ॥३२॥

4225 सङ्ग्रामसीम्नि पतितः सुभटप्रहार-
मूर्च्छाकुलः- सपदि रात्रिभटो मुमूर्षुः ।
खड्गावकृत्तनिपतत्करिकर्णताल-
वृन्तानिलेन समवीज्यत यातुधान्या ॥३३॥

---

१. C करौघैः for शरौघैः ।

4226 निस्त्रिंशघात-विनिकृत्त-भटोत्तमांग-
पीनांस[1]चक्ररचितास्पदपीनजङ्घाः ।
चक्रुः कृतान्तपुरुषा इव तत्र भीति-
मावृत्य सैनिकजनस्य रणे कबन्धाः ॥३४॥

4227 सङ्ग्रामसीम्नि [2]करवालविलूनवीर-
सेनामतङ्गज-सहस्रकरप्रकाण्डैः ।
तार्क्ष्यीयतुण्डपरिखण्डितभोगिभोग-
पातालतालु ललितत्विषिरन्वरोधि ॥३५॥

4228 कम्पानुबन्धिहृदयं प्रतिपन्नशोष-
बिम्बाधरं सुभटदर्शनतोऽत्र नार्याः ।
पुष्पायुधाङ्कललितं वलिताङ्गभङ्ग-
निःसङ्गमन्थरविजृम्भिकमाविरासीत् ॥३६॥

4229 रोचिष्णुरत्न-निकुरम्ब-विषङ्गपिङ्ग-
कीलालकङ्कटितवीचिभुजास्तदानीम् ।
अम्भोधयो दितिजनायक-चक्रवाल-
मायोधयन्प्रहरणीकृत[3]नक्रचक्राः ॥३७॥

4230 संवीतलोहकवचाभिरिवोदभार-
संभारनीलरुचिभिर्हरिचापभाग्भिः ।
अभ्यागमाय सतडित्करवालिकाभि-
रभ्यायये जलदजालवरूथिनीभिः ॥३८॥

4231 तीक्ष्णार्धचन्द्रशरदारितमाहवाग्र-
लक्ष्मीपयोधरभरं करिकुम्भयुग्मम् ।
उत्तुङ्गपीवर[4]मलिप्ततरामभीक-
क्लृप्तार्द्रशोणरुचि शोणितकुङ्कुमेन ॥३९॥

---

१. C omits चक्र । २. A omits करवाल । C omits करवाल ।
३. छत for कृत । ४. C सलिप्त for मलिप्त ।

4232 रोमाञ्चपीनतनुता च सकम्पता च
दार्ढ्यानुबन्धि च सखीष्वपि लोठनत्वम् ।
स्वेदोदबिन्दुनिकरश्च समन्मथाया
दृष्टे बभूव सुभटे सुरलोकनार्याः ॥४०॥

4233 सङ्ग्रामभूः स्फुरितखड्गतरङ्गभङ्ग-
वल्गन्निरर्गलतयोद्धतवाहिनीका ।
आपाण्डुकेतुवसनामलनिर्झराङ्क-
विस्तारिकुञ्जरिकुलाचलमण्डलासीत् ॥४१॥

4234 चैतन्यमाप्य मुखरानकतूर्यशङ्ख-
शब्देन दिक्षु सपदि व्रजता विकासम् ।
उत्तिष्ठति स्म विषदष्ट इव प्रहार-
मूर्च्छाकुलः प्रपतितः सुभटो रणोर्व्याम् ॥४२॥

4235 ज्योत्स्नावदातरुचिरूर्जितगर्जिताभि-
रावर्जितः क्षयघनाघनमण्डलीभिः ।
स्रस्तः क्षितौ च करिकुम्भविभेदमुक्त-
मुक्ताफलश्रियमवात्करकाकणौघः ॥४३॥

4236 मेघावलीभिरभितोऽप्यपिनेहुषीभिः
संवर्धिताभिरिव तोयमलीमसत्वात् ।
व्यापारिताः पृथुलपीलुशिरःस्थलीषु
विद्युत्कृपाणलतिकास्तरसा निपेतुः ॥४४॥

4237 फूत्कारमुक्तशिखचूर्णतयाथ ताम्र-
दंष्ट्राविडम्बित-ससंध्य-शशाङ्कलेखैः ।
वक्त्रैर्घनाघन-घटाघन-घोरघोष-
सङ्घट्टमट्टहसितं दनुजैर्निरासे ॥४५॥

---

१. C omits तु ।

4238 योधं[1] नृसिंहनखकोटिनिशातशल्य-
नाराचभिन्नरुधिरोक्षितदेहयन्त्रम् ।
संहार-भास्करसहस्र-दुरीक्षमूर्ति
मारान्निरीक्षितुमपि व्यथिता न शेकुः ॥४६॥

4239 तावद्वियोग-भयविह्वल-चक्रवाक-
सङ्घातकातरतरेक्षणपातपीतः ।
क्षीणेऽह्नि पुण्य इव नाकतलात्पतिष्य-
न्भास्वानुपाम्बुनिधि कीर्णकरो ललम्बे ॥४७॥

4240 अस्ताचलव्यवहितो विरलान्धकार-
च्छायानुविद्धमभितो धृतसौकुमार्यम् ।
आकृष्टदीर्घदिवसं करजालमर्कः
स्पष्टाभिलक्ष्यकिणलेखमिवोद्वहं ॥४८॥

4241 देवोऽपि शीतकिरणाभरणस्तदानी-
मालोक्य वत्सरसहस्रमथ व्यतीतम् ।
संध्यासमाधिवनिविष्टमना जजाप
किञ्चिन्निमीलितविलोचनमात्म[2]तत्वम् ॥४९॥

4242 विस्रस्तसान्द्रकिरणो विकटास्तशैल-
कूटा[3]वलम्बि विदधे सहसोष्णरश्मिः ।
बिम्बं विलम्बमनुपेत्य चकार चोर्ध्वं
संध्यासमाधिमवधूय हरोऽनुकारम् ॥५०॥

4243 तस्मिन्प्रनृत्यति तदीयविलोचनाग्नि-
ज्वालाशिखाहतमिवाहिमरश्मिबिम्बम् ।
निर्वापणार्थमिव दाहदशोदयस्य
प्रोच्चैः पराचि न चिराज्जलधौ ममज्ज ॥५१॥

---

१. A योधेन सिंहनखकोटि for योधं नृसिंहनखकोटि ।
२. C omits त्म' ।    ३. C omits व ।

4244 शोभां बभार [1]दिनभङ्गविगाढराग-
रक्ताम्बरं स्मररिपावथ ताण्डवस्थे ।
तद्बाहुयन्त्रपरिघूर्णितनागकृत्ति-
विष्यन्दिसान्द्ररुधिराङ्कमिवान्तरिक्षम् ॥५२॥

4245 निर्दग्धधूर्मतिदशे समयानिलेन
नीते प्रदीप इव निर्वृतिमर्कबिम्बे ।
आविर्बभूव घनकज्जलजालकल्प-
मन्धं तमः पटलमाविलयंस्त्रिलोकीम् ॥५३॥

4246 आलिङ्गितो जलनिधेरथरत्नकम्बु-
शोभाधरातनुतरङ्ग-भुजावलीभिः ।
लेखाङ्गनाभिरुदयाचलमारुरुक्षु-
रुत्तिष्ठति स्म शयनादिव शीतरश्मिः ॥५४॥

4247 ज्योत्स्नाङ्कुरावलिरिवाविरभूद्द्युवल्ल्या
रेजेऽग्रपल्लव इवातनुसांध्यरागः ।
पुस्फोर पुष्पनिकुरम्ब इव ग्रहौघः
पीनत्व[2]माप फलबन्ध इवामृतांशुः ॥५५॥

4248 दधतेव रसातलान्तलग्नं
सपदि क्षालितशेषमूर्मिभङ्गैः ।
स्फुटलक्ष्मनिभेन पङ्कजालं
शिशिनोदैयत तोयराशिमध्यात् ॥५६॥

4249 अभ्युत्थिते शशभृति क्रमभिन्नपीन-
नैशान्धकारमवलोक्य परस्परं ते ।
आस्फालितस्फुरितदीधितिरत्नदण्ड-
चापाः पुनर्युयुधिरे सुरदैत्ययोधाः ॥५७॥

---

१. A चिरभङ्ग ।   २. C reads पीनत्वसी ।

4250 इति निशितकृपाणप्रासनाराचचक्र-
व्रणित-विबुधसेनासङ्कटे दैत्यलोके।
प्रसृतरुधिरसिन्धुक्षोभनिर्भिन्नरत्न-
द्रुमसरणिनितम्बा मेरुभित्तिस्तदाभूत् ॥५८॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये सुरासुरविमर्दो नामैकोनपञ्चाशः सर्गः।

---

## पञ्चाशः सर्गः

4251 भग्नेष्वधोक्षजपितामहवासवेषु
दैत्याधिपेन सकलैः सह लोकपालैः ।
[1]पश्याक्षमित्यभिदधे भगवान्सरोष-
मास्फाल्य निष्ठुरमथोन्नतकोटिचापम् ॥१॥

4252 पश्याधुनामु[2]मुरगाशनकेतुमत्र !
भग्नं विरुग्णरणरागमितोऽन्धकेन ।
यस्य व्यधाषित चन्द्रमरीचिशुभ्रैः
साधारणांशुकभृतः ककुभो यशोभिः ॥२॥

4253 दैत्येन्द्रमार्गणगणाभिहतस्य पश्य !
रत्नच्छटारुणितमात्मभुवः शरीरम् ।
निद्राविमुक्त-मधुसूदन-नाभिपद्म-
निष्पन्दिसान्द्रमधुदिग्धमिवाधुनापि ॥३॥

4254 पश्याततायिकठिनास्थिशिलाविभेद-
कुण्ठीकृताश्रि कुलिशं युधि निर्जितस्य ।
दैत्यैः करे शतमखस्य [2]भयोदयोत्थ-
घर्माम्बुसिक्तमिव संतनुते न तेजः ॥४॥

4255 दैत्यास्थिवज्रकषकुण्ठतरारचक्रं
चक्रं त्रपापरिः चयच्युतचण्डचर्यम् ।
विष्णोर्भयाकुलतया व्यपलीनवह्नि-
धूमायमानमवलोकय पाणिलग्नम् ॥५॥

---

१. C पञ्चाक्ष । २. A, B read भयोदयोऽर्क for भयोदयोत्थ ।

4256 आबद्धकोपदितिजाधिपबाहुचक्र-
चक्रीकृताततनुशरासनबाणपातैः ।
भङ्गीशतैः प्रकटरन्ध्रपरीतमध्य-
मापूर्णमेति विततश्रियमर्कबिम्बम् ॥६॥

4257 नाराचनिर्दलितबिम्बतयैष भग्न-
सङ्ग्राम[1]दुर्ललितदुर्धर-धैर्यबन्धः ।
अध्यास्यमानहृदयो हरिणेन पश्य !
[2]सङ्क्रान्तकातरतदीयमना इवेन्दुः ॥७॥ लीन

4258 पश्यास्तपर्वतमिवाभ्रकपङ्कनील-
मासाद्य दानवचमूपतिमेतदग्रे ।
पर्याकुलोऽधिकमनूष्मतया रणेऽत्र
भग्नः प्रतापविभवेन सहैव भानुः ॥८॥

4259 बिभ्रद्गदां विदलितारिकपालगुर्वीं
[3]लीलाविलम्बितमनोहरशङ्खपद्मः ।
व्यापारितायुधशतोऽन्धकबाणवर्षै-
र्नाभाति शौरिरिव जर्जरितोऽर्थनादः ॥९॥

4260 पश्यैष निर्जयकृतभ्रुकुटीविभङ्ग-
च्छायोपबृंहितनवाञ्जन[4]पुञ्जवर्णाम् ।
वक्त्रश्रियं घटितनीलपटां ह्रियेव
धत्ते यमः परिहरन्मम दृष्टिमार्गम् ॥१०॥

4261 धत्ते मुखेषु वरुणो रिपुरोषवह्नि-
ज्वालारुणां तनुमसावसमाप्तकम्पः ।
नित्यावबद्धमकरालयवासलग्न-
दुर्वारवाडवकृशानुशिखामिवैताम् ॥११॥

---

१. A निर्दलित । २. B सङ्क्रान्तकारक ।
३. A लीलावलम्भित । ४. A चूर्णवर्णाम् for पुञ्जवर्णाम् ।

4262 उत्सृष्टदिग्गजगलन्मदवारिगण्ड-
पिण्डीकृतैरविरलं भ्रमरैः पतद्भिः ।
पश्यैष किंशुकवनभ्रममोहमन्दै-
रन्वीयतेऽग्निरसुरैर्विहितोष्मभङ्गः ॥१२॥

4263 सान्द्रीभवत्यमलमेचकखड्गमेघ-
घोरान्धकारनिकरः स्थगितान्तरिक्षः ।
संत्रासविह्वलबलप्रतिपत्तिमूढ-
गाढानिलोच्छ्वसितधूमशिखासहस्रैः ॥१३॥

4264 यत्कीर्तनादपि निजेषु निकेतनेषु
भीतैर्मरुद्भिरुदविज्यत बद्धकम्पम् ।
उद्यच्छमानमवलोक्य तमाहवाग्रे
सम्भ्रेमुषा सुरगणेन यतोऽपसस्रे ॥१४॥[1]

4265 तत्स्यन्दनं सपदि चोदय ! दर्पमूढ-
दैत्याधिपाभिमुखमूर्जितसिंहवाहम् ।
ऊष्माणमेतमधुना विषमेषुवर्षं
संत्याजयामि युधि शैलमिवात्र यावत् ॥१५॥

4266 इत्यूचुषि स्मररिपौ तरसा मुमोच
सूतोऽन्धकं प्रति रथं कृतमेरुकम्पम् ।
दैत्याधिपस्य न चचाल रथोऽपि यन्तृ-
स्चोदितः किमपि भावि भियेव पश्यन् ॥१६॥

---

१. A omits from 14th श्लोक to 40th श्लोक ।
C omits from 14th श्लोक to 40th श्लोक ।
B omits from 14th श्लोक to 40th श्लोक ।

4267 व्यस्यन्निवाशु भुवनत्रितयाधिराज्य-
लक्ष्मीं पतत्त्रमरुताथ सुमेरुकुञ्जात् ।
गृध्रः परेतपतिदूत इव ध्वजाग्र-
मध्यास्त तस्य रभसादरुणोत्तमाङ्गः ॥१७॥

4268 सस्यन्दिरे जलभृतो भुवनारविन्द-
कोषप्रतिष्ठ-मकरन्दरसायमानम् ।
सानन्दगृध्रकुलषट्पदचक्रवाल-
वाञ्छाविपूरणमनर्गलमस्रवर्षम् ॥१८॥

4269 खड्गाजुघू करणघाञ्जुघुरुर्घनौघा-
निर्घात-घोरघटनास्थितिमाप पृथ्वी ।
वज्राभिघातपरुषं पिशिताशिनश्च
चक्रुर्महाप्रलयशंसिनमट्टहासम् ॥१९॥

4270 धैर्यावधीरितशुभेतरघोररूप-
चिह्नस्य दानवपतेः समराजिरोर्व्याम् ।
शंभोश्च दृष्टजयलिङ्गनिराकुलस्य
वेगात्समीयतुरथातिरथौ तथा तौ ॥२०॥

4271 अह्लादि दुन्दुभिराहननादगुञ्जि
गुञ्जागणेन विधुरैर्मुखरैरभावि ।
अस्वाणि गोमुखशतैः पणवैरराणि
तस्मिंस्तयोरथ रणे प्रविजृम्भमाणे ॥२१॥

4272 आहन्यमानकिखरानकगोमुखादि-
वादित्रघोषमुकरा ककुभो बभूवुः ।
दैत्याश्च शैलकुहरप्रतिशब्ददीर्घ-
घोरा त्रयेण मुमुचुर्युधि सिंहनादम् ॥२२॥

4273 योधा युधे कृतधियो रभसेन वल्गु-
संवादिफल्गुनमफल्गुफलं ववल्गुः ।
पाणिस्थिताकृपकृपाणनिपातपीत-
मत्तद्विपा कृपकृपाण कृपीटपट्टाः ॥२३॥

4274 सङ्ग्राममङ्गलमुपेत्य जगुः सकम्प-
हस्तांगुलीशिथिलकोणहता विपञ्चीः ।
शंभोर्विलोकननिरर्गलजृम्भमाण-
पीनध्वजाः सरसमप्सरसो दधत्यः ॥२४॥

4275 तस्याथ मूर्ध्नि मदमन्थरितद्विरेफ-
पक्षानिलाभिहत-कम्पितकेसराग्रा ।
आनन्दनिर्भरनभश्चरचक्रहस्त-
मुक्ता पपात सुरपादप-पुष्पवृष्टिः ॥२५॥

4276 आभादखेटखटकामुखहस्तदीर्घ-
रक्तांगुलीनखमणि-प्रतिबिम्बगर्भम् ।
प्रत्युप्तदीप्ततररत्नमिवोच्छिखाच्छ-
रश्मिच्छटं कनककुण्डलमन्धकस्य ॥२६॥

4277 तस्मिन् दुधूवुषि धनुर्धरधैर्यबन्ध-
मायोधने धनद-योधजनेन सार्धम् ।
सेनानका इव तदा गिरयो विनेदु-
र्मौर्वीनिनादमुखरीकृतरन्ध्रभागाः ॥२७॥

4278 कोदण्डकोटिघटितोरगराजमौर्वी-
वेल्लत्फणामणिगणप्रतिबिम्बगर्भम् ।
माणिक्यशेखरमिवामृतरश्मिखण्ड-
मीषत्किरीटघटितं बिभराञ्चकार ॥२८॥

4279 तस्योर्मिभङ्ग-विषमोन्नतबाहुदण्ड-
खण्डान् दहन् धनुषि दानवसिन्धुनाथान् ।
ज्वालाङ्कुरालितमुखस्तरसातिगाढ-
मौर्वीकृतस्थितिरराजत भोगिराजः ॥२९॥

4280 कोदण्डदण्डघटिताटनिगाढबन्ध-
तान्तेन तस्य विकसत्फणचक्रवालम् ।
नागेश्वरेण पपिरे शिशिराः शिरःस्थ-
मन्दाकिनीजलतरङ्गघटा समीराः ॥३०॥

4281 शूत्कारिपक्षमरुतः स्फुरदग्निशात-
शल्याः शराः शशिकलाङ्कितबाहुमध्यात् ।
निश्चक्रमुर्दितिसुताभिमुखं हिमाद्रि-
कुञ्जान्तरालगहनादिव राजहंसाः ॥३१॥

4282 छायामयीं विदधतो भुवनेष्वकाण्ड-
कल्पावसानरजनीमिव तस्य संख्ये ।
आकर्णकृष्टवलयीकृतचारुचाप-
चक्रच्युता भुवनमानशिरे शरौघाः ॥३२॥

4283 मौर्वीकृतस्य खटकामुखपाणिकृष्ट-
मध्यं क्रमेण फणिनः फणचक्रवालम् ।
फूत्कारपावकशिखा धनुषोऽथ तस्य
चक्रीकृतादिषुगणाश्च समं निपेतुः ॥३३॥

4284 रूढारूढं तदुरसि स्फुटकेकिपिञ्छ-
पुङ्खाः शरा दितिजकार्मुकचक्रमुक्ताः ।
कल्पद्रुमा इव महीध्रतटीविचित्र-
संफुल्लरत्नकुसुमस्तबका निपेतुः ॥३४॥

4285 कृत्तोपवीतभुजगाधिपमूर्धरत्न-
पुष्पोपकारकृतसंयुगवर्मशोभैः ।
वक्षःस्थले पुररिपोरसुरेन्द्रचाप-
चक्रच्युतैः शरशतैश्चतुरं निपेते ॥३५॥

4286 कल्लोलजालकलिला विवलत्कपाल-
कूर्मोदराः शिरसि तस्य शराश्रयाशैः ।
मन्दाकिनीजलरथाः पपिरे पतद्भि-
रह्नाय सिन्धव इव प्रलयार्कपादैः ॥३६॥

4287 संधास्यमानकृतमार्गणसंधियोग-
चक्रीभवन्मणिशरासनबाहुजालः ।
दैत्याधिपः स्फुरदनेकशशाङ्कखण्ड-
मार्तण्डमण्डल इवाम्बरमार्ग आसीत् ॥३७॥

4288 मन्ये च तस्य वलयीकृतकार्मुकस्य
सङ्ग्रामकर्मठ-कठोरकरालबाहोः ।
प्रागततायिपृतनासुभिरभ्यपाति-
पश्चान्निशाततरशल्यमुखैर्विपाटैः ॥३८॥

4289 आबद्धकोपदितिजाधिपबाहुदण्ड-
मध्यान्निरीयुरथ संयुगवर्म बाणाः ।
संहारमारुतपराहतसिन्धुवीचि-
चक्रादिवोज्ज्वलितवह्निमुखा भुजङ्गाः ॥३९॥

4290 निष्ठ्यूततीव्रशिखिनः शितिकण्ठमौलि-
मालाकपालशकलेषु निशातशल्याः ।
निष्पेतुरर्ककिरणा इव कर्कशेषु
कैलासशैलशिखरेषु सुरारिबाणाः ॥४०॥

4291 तत्पातनिर्दलितमौलिकपालपट्ट-
धूमच्छटामलिकलोचनमाविशन्तीम् ।
सेवाविचक्षण इव श्वसितैर्निरास-
कर्णावतंसभुजगः शशिखण्डमौलेः ॥४१॥

4292 उद्दामदाह-परिवर्तित-जिह्मकोटि-
रुत्तंसचन्द्रकलिका शिरसि स्मरारेः ।
दैत्याधिराजविशिखाग्निशिखासहस्र-
निर्यत्सुधास्रुतिरभूत्सविशेषतन्वी ॥४२॥

4293 तस्याहवे विकटपिच्छकलापभार-
[1]शङ्कुच्छलस्फुटितचन्द्रकिखण्ड्यमानाः ।
उद्दाम[2]कोपदितिजाधिपचापचक्र-
मुक्ताः शरा विषधरा इव सन्निपेतुः ॥४३॥

4294 अभ्यापतन्मुदितखेचरचक्रवाल-
सामाजिकस्तिमित-लोचनचक्रदृष्टः ।
दैत्याधिपोऽद्भुतविधायि विजृम्भमाण-
विश्लिष्टसंधि-डिमडम्बर-चारणोऽभूत् ॥४४॥

4295 आनेमुषो विजहता दधुषश्च दर्प-
मानिघ्नता जुहुवुषोऽभिमुखं यतारात् ।
तेनाखिला युधि परस्पर[3]मूयिरेऽथ
गाढं शरैर्दशदिशो दृढचापमुक्तैः ॥४५॥

4296 आकर्णकुण्डलित-कर्कशकालदण्ड-
चक्रायमाणमणिकार्मुकनिर्गतेन ।
बाणेन वक्षसि जघान मृगाङ्कमौलि-
माबद्धमत्सरमथावसरेऽसुरारिः ॥४६॥

---

१. A मंथच्छलत् ...for शंकुच्छलत् । २. A उद्दामकोटिदितिजाधिप ।
३. C सूयिरेथ ।

4297 देवोऽपि दानवपतेः पृथुजत्रुसीम्नि-
तिष्ठेत्युदीर्य शरघातविवृद्धमन्युः ।
प्रेङ्खन्मुखाग्रशिखिनं निचखान बाण-
मुत्संख्यसंख्यकृतपुङ्खतयोरुपुङ्खम् ॥४७॥

4298 तावुत्तरोत्तरदुरुत्तरतारतम्य-
ताम्यद्दिनाकुशकृशानुपरीतबाणौ ।
सङ्ग्रामवर्त्मनि परस्परस्न्ध्रलाभ-
बन्धाभिसन्धि चिरमक्रमतामवन्ध्यम् ॥४८॥

4299 वक्षोऽन्धकस्य निजघान घनाघनत्वि-
डीशस्तडिन्निबिडचण्डकडारकाण्डैः ।
कूलाद्रिसानुकटकं विकटैस्तरङ्ग
भङ्गैः सवाडवशिखैरिव कूर्मकेतुः ॥४९॥

4300 प्रेङ्खच्छिखा विशिखसंहतिरन्धकेन
मुक्ता ततः शिरसि शूलभृतः शरारोः ।
चूलावचूलफणिफूत्कृतिवह्निहेति-
संप्लुष्टपक्षतिपुटा विषमं न्यपप्तत् ॥५०॥

4301 कर्णावतंसितफणि-स्फुरितस्फुलिङ्ग-
फूत्कारवह्नितपनातपदग्धपक्षः ।
व्योम्नः पतन्दितिसुताधिपशैलमूर्ध्नि
संपातिविभ्रममधत्त वृषाङ्कबाणः ॥५१॥

4302 विस्तारिशल्यमुख-निर्गतरोहिदश्व-
शारीकृताम्बरतला भयमादधानाः ।
तच्चापमण्डलविनिष्पतिताः प्रसस्नु-
रुल्कापिशाचनिचया इव दिक्षु बाणाः ॥५२॥

4303 दूरं दरिद्रिहि दरेण विदारयाद्री-
न्द्पोंद्धताञ्जहि जहीति नरानरातीन् ।
इत्याहरन्प्रविजहार सकर्णजाह-
रक्तान्तनेत्रयुगलो विजहौ च खेदम् ॥५३॥

4304 गुञ्जद्गुणाविरलशब्दविमिश्रगाढ-
मौर्वीविरावमुखरोऽथशिलीमुखौघः ।
दूरादशिश्रियदिवाम्बरचारिचक्र-
मानन्दमस्य सुरवैरिवधाहितं[1] सः ॥५४॥

4305 वक्त्रामृतांशुपरिवेषपृषत्कपीठ-
निष्ठ्यूतनिष्ठुरविपाठविजर्जरांसः ।
योधान्मुमोच रणमूर्ध्नि मुमूर्षवोऽथ[2]
रन्ध्रे न जातु रिपुषु प्रहरन्ति धीराः[3] ॥५५॥

4306 तत्पत्त्रिभिः सुररिपोः शकलीकृताना-
माकाश एव कलधौतशिलीमुखानाम् ।
रेजुः पतत्प्रचुरचूर्णपरागदिग्ध-
बालार्करश्मिशबला इव शैलकूटाः ॥५६॥

4307 सङ्ग्राम-नाटकविलोकन-कौतुकात्त-
सञ्चारखेचरसहस्रविमानपंक्तीः ।
ऊर्ध्वंतरां तरणिमार्गरुधः प्रचण्ड-
कोदण्डनिर्गतशरामनयत् [4]स्मरारेः ॥५७॥

4308 तच्चापनिर्गतनिरर्गलमार्गणौघ-
पक्षानिलाहतिविजर्जरिताभ्रमासीत् ।
व्यापार्यमाणविविधायुधघातरूढ-
गाढासितव्रण[5]किणाङ्कमिवान्तरिक्षम् ॥५८॥

---

१. C वधाद्विसेना । २. C मुमूर्षितोऽथ । ३. A, C वीराः ।
४. C मनयः स्मरारेः । ५. C omits किण ।

4309 आपीयत स्थगितभास्करबिम्बबीज-
कोषैर्नवातपमधुस्फुटपत्त्रशोभैः ।
ज्याघोषगीतिमुखरैर्भुवनारविन्द-
गर्भास्पदं सपदि दैत्यशिलीमुखौघैः ॥५९॥

4310 विस्तार्य चापमथ विस्फुरदग्निहेति-
निःशङ्कहुङ्कृति निधानमहंकृतीनाम् ।
दैत्याधिपः कुटिलित-भ्रूकुटीविभङ्ग-
भास्वल्ललाट इति धूर्जटिमावभाषे ॥६०॥

4311 तिष्ठाधुना क्व नु वटो मम दृष्टिमार्गात्
गन्तासि ? पुष्पविशिखोऽस्मि ! न मन्दवीर्यः ।
कालोऽथवा न कृपणः कृमिकीटजन्तु-
जीवापहारचतुरो न गजासुरो वा ॥६१॥

4312 अन्या हि नृत्तरभसोत्थितदत्ततात-
वेतालमालिततला पितृमन्दिरोर्वी ।
सङ्ग्रामभूमिरपरा भटचण्डचक्र-
दोर्दण्डदर्पनिकषोपलपट्टि[1]काश्रीः ॥६२॥

4313 इत्यूचिवान्निरभिनत्स्मयमान एव
तं पञ्चभिर्ज्वलितवह्निशिखैः पृषत्कैः ।
किञ्चिचदीयविशिखाशनिपातभिन्न-
वक्षश्चचाल च शशाङ्ककलाव[2]चूलः ॥६३॥

4314 तस्मिन्मनाक्[3]चलति षण्मुखदत्तदृष्टि-
दृष्टार्तिलेशसदपत्रपलम्बवक्त्रे ।
आमर्दकस्त्वरितमन्धकमभ्यधाव-
दुत्पाटितस्थगितभानसु[4]मेरुकूटः ॥६४॥

---

१. C पट्टका श्रीः । २. C शूलः for चूलः ।
३. C दलति । ४. C मेरुकूटः ।

4315 दैत्याधिपस्तमथ संमुखमापतन्त-
मालोक्य कोषविवशो विशिखैररौत्सीत् ।
तच्चोदितं शिखरमुच्छिखरत्नसार-
मस्याभिनत्तिलतुलामधिरूढ[1]मन्यैः ॥६५॥

4316 तस्मै रथाङ्गमकिरन्मुरजिन्महाजि-
हेलो हली हरितसप्तिसुतश्च दण्डम् ।
संस्तभ्य तानथ शरैः स सहस्रसंख्यैः
संख्ये जघान लघु पञ्चभिरिन्दुमौलिम् ॥६६॥

4317 कोदण्डदण्डशिखरस्थ[2]फलासहस्र-
फूत्कारवह्निकणतारकितान्तरिक्षम् ।
चिच्छेद वासुकिगुणं किरतः पृषत्का-
नासाद्य रन्ध्रमथ तस्य शरैः [3]सुरारिः ॥६७॥

4318 प्रत्युप्तदीप्तमणिदीधितिचक्रवाल-
सङ्कीर्यमाणविकटोन्नतकोटिदण्डम् ।
विच्छिन्नपन्नगगुणं धनुरिन्दुमौले-
रिन्द्रायुधश्रियमदीधरदन्तरिक्षे ॥६८॥

4319 सच्छिन्नवासुकिगुणो जयलाभलिङ्ग-
मालिङ्गिताम्बरशिखराग्रशिखास्फुलिङ्गम् ।
जग्राह कोपकुटिलभ्रुकुटीविभङ्ग-
पिङ्गेक्षणाननदुरीक्ष्यवपुस्त्रिशूलम् ॥६९॥

4320 निःशेषलोककवलग्रहणाय वल्ग-
दालोलहेतिरसनस्तरसोत्पतिष्यन् ।
तस्याभिवादयितुमौर्वमिवाग्निमाशु-
हुङ्कारवह्निरुदधौ झगिति न्यपप्तत् ॥७०॥

---

१. A सैन्यैः । २. A, C फणासहस्र for फलासहस्र ।
३. A, C स्मरारि for सुरारिः ।

4321 तेनाथ शङ्करकरभ्रमितेन तूर्णं
मक्षुण्णमेव घनवर्त्मनि घर्मरश्मेः ।
आवध्यत त्रिगुणमाशु विवृत्तिलोल-
शाखात्रयानलशिखापरिवेषचक्रम् ॥७१॥

4322 आकृष्टशैलशिखरं तरलीकृतार्क-
चन्द्रं समुद्रसलिलप्लुतनाकमार्गम् ।
पुञ्जीकृतोडु दलितक्षितिपीठपृष्ठ-
मासीदनुभ्रमणलोलममुष्य विम्वम् ॥७२॥

4323 शूलाग्नितापदलितोपलमूलसंधि-
भागानि भग्नतटकल्पतरूणि तूर्णम् ।
[1]पेतुर्विमुक्तिविकटीकृतदूरदृश्य-
पृष्ठप्रतिष्ठितनभांसि शिरांसि मेरोः ॥७३॥

4324 तस्मिंश्च धूर्जटिकरभ्रमिते विधूत-
सिन्धूर्मिसंहतिपरिप्लुतनाकपृष्ठे[2] ।
पुस्फोर तद्दहनपीवरविस्फुलिङ्ग-
विश्लिष्टभेदमहिमांशुमरीचिविम्वम् ॥७४॥

4325 [3]ऊहुः पिनाकशिखितापविलीयमान-
विस्तीर्णकाञ्चनशिलाशिखरप्रवृत्ताः ।
रत्नोपलस्खलनभिन्नजलाः सुमेरोः
कूलङ्कषाः कटकभूमिषु निर्झरिण्यः ॥७५॥

4326 शाखान्तरालपरिवर्तविलोलवह्नि-
ज्वालाकलापविकटाञ्जलिभिस्तदानीम् ।
तेनोदपीयत परिभ्रमणानुवन्ध-
सञ्जातदुर्धरदशेव सुरस्रवन्ती ॥७६॥

---

१. A तेपुर्विमुक्त for पेतुर्विमुक्त । २. C माकपृष्टम् ।
३. C ऊचुः ।

4327 ज्वालाकलापकवलीकृतसप्तसिंधुं
तापस्फुरद्विकटटाङ्कृति शैलकूटम् ।
चण्डालिकज्वलनमूर्जितमुत्ससर्ज
संवर्तकाल इव वक्त्रतलेन शंभुः ॥७७॥

4328 तेनान्धकस्य विकटोन्नतचापचक्र-
मुक्ताः शराः स्थगितदिक्तटमापतन्तः ।
[1]निर्देहिरे जरठहेतिशतैः सरीढ-
मौर्वाग्निनेव मकराकरवीचिभङ्गाः ॥७८॥

4329 तं शूलशक्तिमुसलाशनिपट्टिशासि-
पट्टैर्निहत्य पुरजिद्दितिजं जुघोर ।
घोरास्त्रवृष्टिभिरथार्दिददन्धकोऽपि
तस्मिन्पुनः स ववृधे सविशेषमग्निः ॥७९॥

4330 कोदण्डमण्डलविनिर्गतमस्य बाण-
जालं युधि प्रसभमिन्दुधरो निहत्य ।
वेगाद्रथं प्रति [2]ससार तमाजघान
दैत्याधिपोऽपि गदया गुरुशूलहस्तम् ॥८०॥

4331 दैत्याधिपेरितगदादलितोत्तमाङ्ग-
विष्पन्दिसान्द्ररुधिरोक्षितदन्तुरार्चिः ।
जज्वाल धूर्जटिमुखाग्निरुवोष चाथ
तत्स्यन्दनं सतुरगध्वजसूतचक्रम् ॥८१॥

4332 कपिशितदशदिग्भिर्वह्निना हेतिचक्रै-
स्त्रिपुर इव तदानीं स्यन्दने तेन दग्धे ।
शिशिरकरकिरीटं दैत्यनाथो जिघृक्षुः
सरभसमथ दर्पादुत्पपातान्तरिक्षम् ॥८२॥

---

१. C निर्न्देहिरे । २. C मरार for ससार ।

4333 स्मितविकसितगण्डभित्ति भाग-
स्तमभिमुखं गुरुवेगमापतन्तम् ।
सममभिनदशेषदैत्यकान्ता-
जनहृदयैस्त्रिशिखेन शूलपाणिः ॥८३॥

4334 तद्वक्षः स्फुरितकृशानुशूलकोटि-
झांकारारव बधिरीकृतान्तरिक्षम् ।
सस्यन्दे रुधिरमकारि येन संध्या-
ताम्रांशुच्छुरितमिवाभ्रचक्रवालम् ॥८४॥

4335 दितिजरुधिरधारासिक्तशूलाग्रि भाग-
ज्वलनजनितधूमश्यामलं सूर्यबिम्बम् ।
विगलित-रुचिटङ्काघात-संसक्तमूल-
क्षतजमिव तदानीमन्तरिक्षे रुरोच[1] ॥८५॥

4336 सस्यन्दे त्रिशिखविदारितात् सुरारे-
र्यद्वक्षः कटकतटादसृक्छटाम्भः ।
विश्वेषामकुरुत तत्प्रतापवह्नि-
प्लुष्टानामपि जगतां तदेव शान्तिम् ॥८६॥

4337 त्रिशिखमुखविभेदादञ्जनक्षोदपुञ्जः
च्छविरवनिमुमुञ्चद्व्योमसीम्न्यर्द्य[2]मानः ।
गगनभुवि स एवालोक्यतारातिसैन्यै-
र्दितिसुतकुललक्ष्मीसंक्षयोत्पातमेघः ॥८७॥

4338 तद्वक्षः कटकादसृङ्निपतितं सान्द्रं कपालोदरे
पीत्वातत्परिणामपाटलमिवाताम्रं वपुर्बिभ्रती ।
चामुण्डाङ्गुलिकोटिभागमलनात्तद्वीर्यबीजांकुरा-
नच्छिन्नाखिलसन्ततीन्सरभसं चक्रे प्रतिच्छन्दकान् ॥८८॥

---

१. C रुरोध for रुरोच ।　　२. C सीम्यर्दमानः ।

4339　त्रिशिखदहनज्वालातापक्वथद्बहलासृजः[1]
　　सपदि वपुषस्तस्याशेषात्कृतादथ भस्मसात् ।
स्तिमितनयनव्रातैर्दृष्टं सुरासुरमण्डलैः[2]
　　शशिधरकलामौलेर्ज्योतिः शरीरमथाविशत् ॥८९॥

4340　ग्रासीकृतार्दितसुरासुरचक्रवाल-
　　सङ्ग्रामसागरगतान्धककालकूलः[3] ।
निर्धूतचामरमरुत्परिवीजितांस-
　　पीठं दिदेश हरयेऽथ स राज्यलक्ष्मीम् ॥९०॥

4341　उन्मूलिताखिलविपक्षगणासु तूर्ण-
　　मस्याज्ञया पुर इवामरलोकपालाः ।
दिक्षु क्रमादथ यथायथमेव गुप्ति-
　　हेतोःस्थितिं प्रमदफुल्लदृशो बबन्धुः ॥९१॥

4342　निपतितमरिसैन्याभ्याहतं संयुगोर्व्यां
　　निजकरपरिमर्शान्निष्प्रहारव्रणं सः ।
शशिशकलकिरीटस्यन्दमानामृताम्भः
　　स्नुतिकृतपरिषेकं जीवयामास सैन्यम् ॥९२॥

4343　दिशि दिशि मकरन्दस्यन्दमाद्यद्द्विरेफाः
　　सुरभितघनमार्गाः पुष्पवृष्टीः किरन्तः ।
प्रतिनवमुखरागानेकवादित्र घोषा-
　　स्तमहितवधतुष्टास्तुष्टुवुः सिद्धसाध्याः ॥९३॥

4344　जगुरमरतरुण्यो मङ्गलं तारमन्द्र-
　　क्रमतरलितहारोत्कम्पिपीनस्तनाग्राः ।
अविरतविविधभ्रूभङ्गसंलक्ष्यमाण-
　　स्फुटतरगुरुचेतोवासना नाकमार्गे ॥९४॥

---

१. B क्वविद्ध ।　　२. A सुरासुरसैनिकैः ।
३. A कालकूटः ।

4345 त्रिदशगणपतींस्तान्विश्लथन्मौलिरत्न-
प्रणतिनतशिरस्कान् संयुगे दृष्टभक्तीन् ।
अभिमतवरलाभैः सोऽथ संभाव्य देव्या-
सह सुखमनुभावात् स्वां पुरीमध्यतिष्ठत् ॥९५॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये देवदेवप्रतिष्ठापनं नाम पञ्चाशः सर्गः ।

---

## समाप्तं हरविजयम्

## ग्रन्थकर्तुः प्रशस्तिः

श्री दुर्गदत्तनिजवंशहिमाद्रिसानु-
गङ्गाह्रदाश्रयसुतामृतभानुसूनुः ।
रत्नाकरो ललितवन्धमिदं व्यधत्त
चन्द्रार्धचूलचरिताश्रयचारु काव्यम् ॥१॥

स किल कविरेवमुक्तवान्—

*ललितमधुराः सालङ्काराः प्रसादमनोरमा
विकट-यमक-श्लेषोद्गार-प्रवन्धनिरर्गलाः ।
असदृशगतीश्चित्ते मार्गे ममोद्गिरतो गिरो
न खलु नृपतेश्चेतो वाचस्पतेरपि शङ्कते ॥२॥

सान्द्रानन्दामृतरस-परिस्पन्द-निःस्यन्दिनीना-
मस्मद्वाचामतिशयजुषां वस्तुतत्त्वाभिधाने ।
प्रौढज्योत्स्नाधवल-विकसद्दिग्वधूकर्णपूर-
व्रह्मस्तम्भस्तवकयशसां कोऽपि टङ्कारटङ्कः ॥३॥

धाराकाव्यप्रवन्धप्रणिहितपरमः श्रोत्रपेया कवीनाम्
भाषाषट्केऽपि यस्य क्वचिदपि न गता भारती भारवत्त्वम् ।
प्राप्तेज्ञेयावसानस्फुरदमलतरप्रातिभिज्ञानसंपत्
सोऽहं रत्नाकरस्ते सदसि कृतपदः क्ष्माप वागीश्वराङ्कः ॥४॥

---

* The authenticity of this पुष्पिका is doubtful and can not be established, as most of the manuscripts have not made any mention of it. To me it appears that this पुष्पिका is a latter addition by his admirers.

यस्योदयेऽन्धतमसं दहतो विशुद्धि-
रार्विर्भवत्यनिशमेव जलाशयानाम् ।
तद्ग्रस्तवाङ्मयसमुद्रमवेहि राजन् !
रत्नाकरं रविमथैनमगस्त्यमौर्वम् ॥ ॥

दृब्धं सत्प्रज्ञकैर्यन्न जगति कविभिर्वस्तु तन्नास्ति किञ्चित्
क्षुण्णे क्षुण्णत्वचिन्ता गहनविषयता तस्य दूरास्तु तावत् ।
तन्मन्दाभिप्रगल्भप्रसरगुरुगिरामग्रणीर्बाण एको
राजन् ! रत्नाकरश्च ज्वलनवदवनौ जाज्वलीति द्वितीयः ॥६॥

हरविजयमहाकवेः प्रतिज्ञां शृणुत कृतप्रणयो मम प्रबन्धे ।
अपि शिशुरकविः कवेः प्रभावात् भवति कविश्च महाकविः क्रमेण ॥७॥

# श्लोकानुक्रमणिका

अ

आ

उ

## ऊ



## ए

क्ष

घ

ट



त

## ध

प

## म

य

र

**श**

—८—



## स

ह